ब्रह्ममीमांसायां

# ब्रह्मसूत्रार्थसंग्रहः

( ब्रह्मसूत्राधिकरणार्थसंग्रहसहितः )

आद्याध्यायद्वयात्मकः

## त त्त्व दृ ष्टि भा गः

ग्रन्थकर्ता

विद्वान् एच् · एन् · राघवेन्द्राचार्यः, एम्. ए., डि. ओ. सि.

विश्रान्ततत्त्वशास्त्रोपाध्यायः

आस्थानधर्माधिकारी

ब्रह्ममीमांसायां

# ब्रह्मसूत्रार्थसंग्रहः

( ब्रह्मसूत्राधिकरणार्थसंग्रहसहितः )

आद्याध्यायद्वयात्मकः

## तत्त्वदृष्टिभागः


ग्रन्थकर्ता

विद्वान् एच् . एन् . राघवेन्द्राचार्यः, एम्. ए., डि. ओ. सि.

विश्रान्ततत्त्वशास्त्रोपाध्यायः

आस्थानधर्माधिकारी

FIRST EDITION : 1966

*For copies apply to :*
DHARMADHIKARI H. N. RAGHAVENDRACHAR
2939, 'PARIMALA', CHAMUNDIPURAM
MYSORE – 4

*Ordinary copy Rs. 5-00*
*Library copy Rs. 8-00*

PRINTED BY
SAMSKRITA SAHITYA SADANA
2, DEVAPARTHIVA ROAD, CHAMARAJAPURAM, MYSORE – 4

## समर्पणम्

प्रसादादस्य मे शास्त्रे गतिर्लब्धादरान्विता ।
व्यासेऽस्मिन् ब्रह्मरूपेयं कृतिर्भक्त्या समर्पिता ॥

विश्वावसु माघ शुद्ध पञ्चम्यां बुधवासरे

## विज्ञप्तिः

तत्त्वदृष्टिः वृत्तदृष्टिरिति दृष्टिद्वयं मानवजीवनं नियामयति । तत्रापि तत्त्वदृष्टिः वृत्तदृष्टिमूलम् । तस्याः साधुत्व एव मानवस्य वैयक्तिकं राजकीयम् आध्यात्मिकं वा जीवनं साधु भवति । भारतीयतत्त्वदृष्टिनिरूपणप्रस्तावे वक्ष्यमाणविषयचिन्तनमनिवार्यम् । भारतीयानां वस्तुतः धर्मप्रधानजीवनमेव कामयमानानां जीवने दृष्टिभेदकल्पना नास्त्येव । तत्त्वदृष्टिप्रधानजीवनमेव तेषां धार्मिकजीवनम् ।

तत्त्वदृष्टिसाधकत्वेनैव वेदः जगत्सृष्टिनियमो भूत्वा सृष्टिं रूपयति इति भारतीयतत्त्वज्ञानिभिः व्याचिरव्यासितत्वेन प्रकृतस्य ब्रह्ममीमांसाशास्त्रस्य प्रवर्तको वैदिकसम्प्रदायः । अत एव जगन्मूलतत्त्वस्य अतीन्द्रियत्वात् अपौरुषेयवेदैकवेद्यत्वं तस्य सिध्यति । वेदेतरस्य तत्त्वदृष्टिसाधकस्य व्याहतत्वात् । वेदस्तु गहनार्थः । स्कान्दादिपुराणोक्तरीत्या परब्रह्मरूपिणा व्यासेन वेदो दत्तः । तेनैव वेदार्थनिर्णायकन्यायग्रथनात्मकब्रह्मसूत्राणि च रचितानि । तानि सूत्राण्यध्यायचतुष्टयात्मकानि । तत्राद्यद्वयं तत्त्वदृष्टिप्रधानम् । ततो द्वयं वृत्तदृष्टिप्रधानम् इति विवेकः ।

सूत्रैर्जन्यं ज्ञानमपि उक्तविशेषविषयज्ञानसापेक्षम् । एतज्ज्ञानतारतम्यानुगुण्येन वादिनां मतिभेदान्मतभेदः तस्माद्व्याख्यानभेदो जातः । एवं प्रकृतात् मध्वभाष्यात्पूर्वम् एकविंशतिसूत्रभाष्याणि प्रवृत्तानि स्वस्वकार्यमकुर्वन् । परस्परविरुद्धान्यपि पूर्वपूर्वभाष्याणि उत्तरोत्तरभाष्यप्रवर्तकान्यपि दृश्यन्ते ।



'वेदान्तविज्ञानसुनिश्चितार्थाः' श्रीमन्मध्वाचार्याः क्रि. श. १२ शतमाने ज्ञानमेव ऐहिकामुष्मिकसर्वपुरुषार्थदं तच्च ज्ञानं ब्रह्मसूत्रैकसाध्यमिति दृष्ट्वा स्वपूर्वरचितानि एकविंशतिब्रह्मसूत्रभाष्याणि परीक्ष्य सर्वश्रेयोहेतुभूतसर्वशास्त्रार्थनिर्णायकब्रह्मसूत्रार्थकथनस्यावश्यकत्वं मत्वा ब्रह्मसूत्रभाष्यमरचयत् । तत्र सर्वस्यास्य जगतः चेतनाचेतनात्मकस्य श्रुत्युक्तब्रह्मैकमूलत्वं ब्रह्माश्रितत्वं च प्रसाध्य समग्रजीवनमेव ब्रह्ममयं सिद्धान्तयामास । तत्रादरादिपरिकरसहितयथार्थज्ञानसंपादनार्थं निरन्तरजिज्ञासा साधिकारा कर्तव्या इति अदर्शयत् । विचारोपरतिसाधकसिद्धान्तापेक्षया सिद्धान्तितत्वेनाभिमतेपि प्रमेये तत्तत्कालीनानुभवादिसन्निधाने विचारजननं ज्ञातस्य दार्ढ्यसंपादकमज्ञातग्राहकं च इति आचार्यस्य हृदयम् । विचारे उपरते ज्ञानं नष्टमेवेति भावः ।

एवं स्थितं मध्वशास्त्रम् अधिकारिणे प्रकाशात्मकजीवनप्रदम् । अपव्याख्यानादिवशात् तत्तिरोधानं सर्वश्रेयोनिदानं तत्त्वज्ञानमेव असंभावितं करोति इत्यत्र न विशयः । काले चास्मिन् मध्वसिद्धान्तस्थले तन्नाम्ना कतिपयकल्पनाविशेषा एव दृश्यन्ते । यद्यपि जयतीर्थमुनिना स्वटीकासु मध्वाचार्याणामाशयः स्पष्टीकृत एव । तथापि न्यायाध्ययन विलोपात् टीकावाक्यार्थग्रहणं दुर्लभमेवावतिष्ठते ।

सन्निवेशस्यास्य कारणं किं वा भवतु । मम बाल्ये मध्वभाष्याध्ययनसन्दर्भे मध्ववाक्यानां तत्तत्कालीनव्याख्यातृभिः उक्तो अर्थः मध्ववाक्यैरेव बाधितो दृष्टः । अधिकारसम्पत्त्यनन्तरं ग्रन्थस्थमाध्वभावप्रकाशने मम प्रयत्नोपि जातः । भाषाशुद्ध्यर्थं मम भारतीयसमस्तदर्शन-

ज्ञानं श्रद्धावाद(religion) तत्त्ववाद(philosophy) योः भेदग्रहणार्थं तत्त्वदृष्टिशोधनं च प्रकृतमासीत् । अत्रैव विश्वविद्यानिलयोपदिष्टं प्रतीच्यतत्त्वशास्त्रज्ञानं भारतीयतत्त्वशास्त्रज्ञानं च मम अतीवोपकारकम् अभवत् । तस्य केवलविचारात्मकत्वात् । उक्तविधया रूपितं ज्ञानं विना सटीकामध्वभाष्यभावग्रहणं दुर्लभमित्येव मया स्पष्टमनुभूतम् ।

युक्ते वयसि अवस्थायां च मध्वतत्त्वज्ञाननिरूपणार्थमेव क्रमेण अनेके ग्रन्थाः प्रबन्धाश्च विभिन्नभाषासु मया रचिताः । तेषु वक्ष्यमाणाः जिज्ञासूनां मुख्यतः गमनार्हाः ।

१. आंग्लभाषायाम्—

1) The Dvaita philosophy and Its place in the Vedānta — published by the University of Mysore, 1941.
2) Brahma-Mimāmsā Vol. I. Jijñāsādhikaraṇam — published by the University of Mysore, 1965.

२. कर्णाटकभाषायाम्—

1) भारतीयतत्त्वशास्त्रसंग्रहः (History of Indian Philosophy) — published by the University of Mysore, first edition 1930; enlarged second edition 1964.
2) Madhva-Siddhānta, 1944.
3) Is'āvāsya Upaniṣad, 1957.
4) Talavakāra Upaniṣad, 1957.
5) Dvaita Vedānta — published by the Government of Mysore, 1958.



३. संस्कृतभाषायाम्—

1) 'भारतीयतत्त्वशास्त्रेषु मुक्तेः स्थानम्' — Mysore University Prize Essay, 1924.
2) 'वेदान्तानामेकवाक्यता'— published by the Oriental Conference, 1935.

काले चास्मिन् माध्वमाध्वेतरलौकिकवैदिकजनेषु 'मध्वोयं द्वैती' (dualist) इति प्रसिद्धिः सुविदितैव । अतः मन्निरूपितः 'मध्वो निर्दोषब्रह्मवादी, कृत्स्नस्य जगतः सर्वथा ब्रह्मैकमूलत्वं (monism) स्थापितवान्' इति सुबोधार्थफलकः मध्वशास्त्रव्याख्याप्रकारः यथा कथंचित् तत्त्वशास्त्रनिष्ठेषु जनेषु विविधरीत्या अभिप्रायभेदं जनयत्येव । अत्र प्रकरणे ज्ञानार्थमागतान् कांश्चन शिष्यान् विभिन्नानुभववतः विभिन्नवयस्कान् प्रति १९३८ वत्सरादारभ्य एतावत्पर्यन्तम् अविच्छिन्नं सपरिकरं सटीकामध्वभाष्यसहितब्रह्मसूत्रप्रवचनमहं कुर्वन्नस्मि । इदानीं प्रकृतग्रन्थप्रवचनोपसंहारप्रकरणे शिष्यैरपेक्षितरीत्या तेषां श्रुतविषयोपस्थितिसाधकतया 'ब्रह्मसूत्रार्थसंग्रहः (ब्रह्मसूत्राधिकरणार्थसंग्रहसहितः आद्याध्यायद्वयात्मकः तत्त्वदृष्टिविभागः) मया रचितः प्रकाशितश्च वर्तते । वृत्तदृष्टिभागस्तु अनुपदमेव प्रकाश्यते । अत्र ब्रह्मसूत्रार्थसंग्रहः गद्यरूपः । ब्रह्मसूत्राधिकरणार्थसंग्रहस्तु श्लोकरूपः सुखेन मनसि निधातुं शक्यः । यत्प्रमाणं मनसि निधाय मया मध्वतत्त्वविषये इतरग्रन्थाः रचिताः तत्प्रमाणप्रतिपादकः उभयभागविशिष्टोऽयं ग्रन्थः । इदं तु एतदुभयभागपरिचयेन सुस्पष्टं भवत्येव । संग्रहात्मकोऽयं ग्रन्थः स्वभावेनैव मूलग्रन्थोदाहृतप्रमाणात्मकः तन्निरूपितार्थात्मकश्च भवेदिति प्रत्येकं वक्तव्यं

न भवत्येव । यदि प्रतिपाद्यविषयस्पष्टतार्थं मया वक्तव्यं किंचित् भाति तत् सूत्रव्याख्यानात्पूर्वं व्याख्यानादनन्तरं वा निरूप्यते । तच्च मुख्यतः जिज्ञासूनां विचारार्थमेवेति ज्ञातव्यम् ।

मध्वशास्त्रानुचिन्तनं तत्त्वज्ञानस्यासाधारणतयोपकारकं च वर्तते । तत्र युक्तिप्राधान्येनैव समस्तदर्शनपक्षाणां शोधितत्वात् । अत एव मध्वशास्त्रज्ञानं विना भारतीयतत्त्वशास्त्रज्ञानम् अपूर्णमेव । अत्रैव मध्वभाष्यमधिकृत्य 'अन्ते सिद्धस्तु सिद्धान्तः' इति अभियुक्तवचनमपि दृश्यते ।

एवं च केवलमध्वसिद्धान्तसंग्रहपरस्य 'ब्रह्मसूत्रार्थसंग्रहः' इति निर्दिष्टस्य ब्रह्मसूत्राधिकरणार्थसंग्रहसहितस्य अस्य ग्रन्थस्य उपादेयत्वं त्रिधा संभवति । १) अपूर्वतया — इदं च ग्रन्थाध्ययनेन स्पष्टं भवति । २) अत्रोक्तब्रह्मतत्त्वज्ञानस्य सर्वसुखशान्तिमूलतया— इदमपि प्रसन्नधिया ग्रन्थाध्ययनकाले अनुभूयते । ३) विभिन्नप्रजानामेकीकरणसामर्थ्येन च — इदं च आभिजात्यादिनिमित्तकनिष्कृष्टमतापेक्षया सर्वसिद्धान्तनियामकजिज्ञासायामाभिमुख्यमात्रेणैवानुभूयते ।

'प्रतिपाद्यं च प्रमेयमतीव महत्तमम् । प्रतिपादनकर्ता चातीव अल्पतमः । 'प्रांशुलभ्ये फले....उद्बाहुरिव वामनः' इति महाकविः । तत्रापि 'संग्रहात्मकोऽयं ग्रन्थः' इत्येतत् दयया न विस्मर्तव्यम् ।

ग्रन्थं चेमं सादरं सम्यक् मुद्रयित्वा उपकृतवतां महिशूर 'संस्कृत साहित्य सदन' व्यवस्थापकानां कृतज्ञतापूर्वकं वन्दनमर्पयामि ।

मैसूरु — इति विज्ञापयिता

२६-१-१९६६ — धर्माधिकारी एच् . एन् . राघवेन्द्राचार्यः

ॐ तत्सत्

श्री वेदव्यासाय नमः । श्रीगुरुभ्यो नमः । हरिः ॐ ।

# अथ ब्रह्मसूत्रार्थसंग्रहः

व्यासं सूत्रकृदं नत्वा मध्वं भाष्यकृदं तथा ।
टीकाकृदं जयार्यं च शेषार्यान्मद्गुरूनपि ॥ १ ॥
व्यासप्रसादतस्सूत्रभाष्यटीकानुचिन्तनम् ।
पुरुषार्थप्रदं ब्रह्मज्ञानं कार्यं तदित्यतः ॥ २ ॥
प्राच्येषु च प्रतीच्येषु तत्त्वशास्त्रेष्वशेषतः ।
एम्. ए. पदविशिष्टेन नित्यं शास्त्रोपजीविना ॥ ३ ॥
विदुषा राघवेन्द्रेण राजधर्माधिकारिणा ।
क्रियते हि यथाबोधं ब्रह्मसूत्रार्थसंग्रहः ॥ ४ ॥

## पीठिका

विदितमेव हि यथार्थज्ञानं सुखमूलमयथार्थमनर्थमूलमिति । 'सुखमेव मे स्यात् दुःखं मनागपि माभूत्' इति सुखस्य सर्वैरपेक्षितत्वात् सुखसाधनं यथार्थज्ञानमेवेति यथार्थज्ञानसाधनं सर्वथा विचार्यमिति सिध्यति । विचारः प्रमाणमूलकः । सर्वोत्तमं प्रमाणं हि ब्रह्मसूत्रम् । तच्च सुयुक्तब्रह्मस्वरूपव्यवस्थापकश्रुतिवाक्यार्थनिर्णायकन्यायनिबन्धनात्मकम् । अतः तदेव ब्रह्ममीमांसेति कथ्यते । मीमांसा नाम मेयशोधनम् । मेयशोधनं

तु फलतः मेयसाधकप्रमाणबलाबलादिपरीक्षा । अत एव ब्रह्ममीमांसाशास्त्रमिदं प्राधान्येन प्रमाणशास्त्रम् । अत्र नियमेन मेयचिन्ता मानमुखेनैव क्रियते । लोके मेयं किंचित् सर्वथा स्वतन्त्रमिति वा अस्वतन्त्रमिति वा ज्ञायते । यत् स्वसत्ताप्रमितिप्रवृत्तिषु स्वाधीनं तत् स्वतन्त्रम् । यदन्यथा तत् परतन्त्रम् । वस्तुज्ञाने तृतीयप्रकारो न संभवति । अनेनैव मेयं सर्वत्र अतीन्द्रियधर्मविशिष्टत्वेनैव ज्ञायत इति सिध्यति । यद्यपि विषयो दृष्ट इति प्रतीतिः प्रसिद्धैव । तथापि तस्य विषयस्य स्वातन्त्र्यमस्वातन्त्र्यं वा अतीन्द्रियमेवेति तद्विशिष्टाकारेण विषयोऽप्यतीन्द्रिय एवेति विचारेण स्फुटमवगम्यते । तच्च स्वातन्त्र्यादिज्ञानं शब्दैकगम्यम् । शब्दस्तु वाक्याद्यवयवभूतः । उपक्रमादिरूपान्वयसहायेनैव शब्दः अर्थं बोधयति । अत एव ब्रह्ममीमांसाशास्त्रमिदं शब्दशास्त्रमपि भवति । विना च तेन स्वातन्त्र्यादिज्ञानासंभवात् । अनेनैव निमित्तेन सम्प्रदायज्ञगुरूक्तमेव तदर्थत्वेन ग्राह्यम् । नाऽन्यथा । लौकिकैः लोकव्यवहारार्थमेव शब्दप्रयोगात् न लोकप्रसिद्धिः मीमांसैकवेद्यं स्वातन्त्र्यादि गमयति ।

ब्रह्म इति वेदो वा तदर्थभूतमखिलोत्तमं ब्रह्म वा । वेदः अपौरुषेयः । अत एव नित्यः । अतो निर्दोषः । तत एव स्वतः प्रमाणं च । वेदार्थः न कदापि बाध्यते । यथार्थं प्रमाणम् । तत् यथावस्थितार्थविषयीकारि । सर्वांशेऽपि वेदः प्रमाणम् । वेदादन्यत् यत् प्रमाणमिति प्रसिद्धं प्रत्यक्षादि तन्नियमेन वेदानुकूलमेव प्रमाणम् । वेदानुकूलत्वं च वेदमाश्रित्य वेदप्रामाण्योपपादनार्थप्रवृत्तत्वम् ।



शब्दतः अर्थतश्च वेदः अतीव गंभीरः । तस्यार्थस्तु स्वभावेनैव दुर्ग्रहः । अतः प्रतिपाद्यविषयविशेषव्यवस्थया वेदविभागः तत्तत्प्रकरणनियामकन्यायग्रहणे अनिवार्यं आसीत् । तत्तन्न्यायसंचारग्रहणेन तत्तद्वाक्यार्थनिर्णयोपि सुगमो भवेदिति एतदुभयं वेदपतिना बादरायणेनैव सम्यक् साधितम् । विषयव्यवस्था अनेन वेदविभागेन साधिता । वेदवाक्यार्थनिर्णयः तन्निर्णायकन्यायनिबन्धनात्मकसूत्रेण कृतः ।

वेदा अनन्ताः । तथापि वेदाः प्रमाणमित्यनेनैव तेषामर्थस्य एकत्वं सिध्यति । सचार्थः ब्रह्मैवेति वेदेनैव 'सर्वे वेदा यत्पदमामनन्ति' 'तद्ब्रह्म' इत्यादौ निश्चितं दृश्यते । ब्रह्मशब्दस्तु ब्रह्मणो गुणपूर्णत्वं वक्ति । वक्ष्यमाणरीत्या एतदुपपादनावसरे वेदे ब्रह्मणो विष्णुत्वं समर्थितो दृश्यते । अत एव ब्रह्मविष्णुशब्दयोः पर्यायत्वं सिध्यति । अनेनैव निमित्तेन अस्य शास्त्रस्य ब्रह्मशास्त्रं विष्णुशास्त्रं इत्यपि प्रसिद्धिः । पूर्णत्वमिह देशकालगुणेभ्यः आनन्त्यं ततिर्वा । आनन्त्यं ततिर्वा अत्र स्वेतरसत्ताप्रदत्वेनैव । एतत्सर्वं प्रतिसूत्रमपि व्यक्ताव्यक्तरूपेण प्रसाध्यते । अतः सर्वस्मिन्नपि शास्त्रे इदमेव मुख्यं ध्येयं भवति ।

पूर्णत्वमिह न सर्वथा लौकिकम् । तद्वेदेनैव सिद्धमलौकिकम् । विष्णोः पूर्णत्वसाधकं कर्तृत्वम् । तत्तद्गुणकर्तरि तत्तद्गुणसत्तानियामकत्वेन तत्तद्गुणपूर्णत्वं शास्त्रन्यायसिद्धम् । अतः सर्वत्र शास्त्रे विष्णोः पूर्णत्वाभिधायके अनन्यसाधारणकर्तृत्वं तस्य महिमा उच्यते । यत् विष्ण्वर्थ एव कर्तृत्वमुपपाद्य तेन विष्णोः पूर्णत्वं साध्यते तदेव वेदस्य महत्त्वम् । प्रमाणप्रमेयभूतवेदविष्ण्वोः एवं महिमानं तत्र आदराति-

शयरूपया भक्त्या यो जानाति स एव सर्वपुरुषार्थभागिति सूत्रार्थसंक्षेपः ।

ब्रह्मसूत्रमेव शास्त्रम् । तस्य वेदवेद्यार्थनिर्णायकत्वात् । अत्र सूत्रार्थग्रहणसन्दर्भे इदमवधेयम् । श्रुतेः, स्मृतेः, दर्शनात्, आचारात् इति सूत्रे तत्र तत्र उक्तार्थे हेतुरुच्यते । अत्र आगमतया श्रुत्यादिः हेतुर्भवतीति नार्थः । तथात्वे न्यायनिबन्धनात्मकसूत्रवैयर्थ्यापत्तेः । सूत्रस्य न्यायरूपत्वात् सूत्रनिर्णीतार्थकश्रुत्यादिरेव हेतुरिति श्रुतेः इत्यादेः पर्यवसितोऽर्थः । अन्यथा आपाततो प्रतीयमानश्रुत्याद्यर्थस्य सावकाशत्वादिना सूत्रबाधोऽपरिहार्य एव भवेत् ।

एवं सूत्रस्य सर्वार्थनिर्णायकत्वात् तस्य प्रामाण्यं सर्वतोऽधिकम् । अत एव विना सूत्रं न कस्यापि शब्दस्य अर्थनिर्णयः साध्यः । अयं च नियमः वैदिकलौकिकशब्दसाधारणः । अतः शास्त्रे सर्वमपि जिज्ञासितं व्यवस्थापितं च वर्तते । लोके विद्येति या वर्तते सा सर्वापि शास्त्रे जिज्ञासितं किंचिदाश्रित्यैव तिष्ठति । अतो ब्रह्ममीमांसा सर्वशास्त्रप्रतिष्ठारूपा शोभते । अनेन ज्ञायते सर्वापि सृष्टिः शास्त्रप्रामाण्यं सम्यग्घोषयितुमेव प्रवृत्तेति ।

अध्यायचतुष्टयात्मकं शास्त्रं — समन्वयः, अविरोधः, साधनं, फलमिति । एकैकस्मिन्नध्याये पादचतुष्टयं वर्तते । तत्र सर्वशास्त्रे सूत्राणि पञ्चशतोत्तरचतुष्षष्टिः । अधिकरणानि द्विशतोत्तरत्रयोविंशतिः ।



श्रीगुरुभ्यो नमः । हरिः ॐ

नारायणं गुणैः सर्वैरुदीर्णं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ॥

अयं भाष्यस्य आद्यः श्लोकः । गुणैः सर्वैः उदीर्णं, दोषवर्जितं, ज्ञेयं, गम्यं नारायणं गुरूंश्च नत्वा सूत्रार्थ उच्यते इति अन्वयः ।

भाष्योक्तं सर्वं जयतीर्थमुनिः स्वप्रणीततत्त्वप्रकाशिकाख्ये टीकाग्रन्थे विशदीकरोति । तं ग्रन्थमधिकृत्यैव अत्र भाष्येण प्रकटितः सूत्रभावः अधिकारिविशेषाणामुपकारार्थं च यथामति संगृह्यते । तत्र तत्र भाष्योदाहृतप्रमाणान्यपि अर्थस्य स्पष्टतासम्पादनाय निर्दिश्यन्ते ।

ब्रह्मसूत्रागतिक्रमः भाष्योदाहृतस्कान्दवचनेन एवं सिध्यति । कालदोषात् गौतमऋषेः शापाच्च द्वापरे ज्ञानं संशयविपर्ययग्रस्तमभूत् । ब्रह्माद्याः देवाः शरण्यं नारायणं शरणं जग्मुः । तैः विज्ञापितः भगवान् नारायणः व्यासत्वेन अवततार । सः उत्सन्नान् वेदान् उज्जहार । पुनः वेदार्थज्ञानाय ब्रह्मसूत्राणि चकार । 'अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च' इति सूत्रलक्षणं सम्यक् तेषामेव । अतस्तेषामेव मुख्यतः सूत्रत्वम् । वेदार्थनिर्णायकमीमांसारूपत्वात् तान्येव ब्रह्ममीमांसाशास्त्रमिति कथ्यन्ते ।

अत्र भाष्यस्य आद्यश्लोके निरुपपदसूत्रशब्देन ब्रह्मसूत्रमुच्यते । तस्य मुख्यार्थाभिधायकत्वात् । भाष्यकारः सूत्रार्थं श्रोतृबुद्धिमनुकूलयिष्यन् विशेषणचतुष्टयेन इष्टदेवतामत्र विशिनष्टि । यत्प्रसादात् पुरुषार्थो भवतीत्यादिसूत्रे अतश्शब्देन कथितम् । तस्य भगवतः

स्वरूपमुक्तं गुणैः सर्वैरुदीर्णमिति । तद्वर्णनार्थमेव अपर्यायानन्तशब्दानां महायोगवृत्त्या हरौ समन्वयः समर्थ्यते आद्ये अध्याये । युक्त्यादिभिः उक्तसमन्वये निरोधिते भगवतः दोषवत्त्वशङ्का स्यात् । तस्य परिहारः दोषवर्जितमिति कृतः । स एव प्रतिपक्षयुक्त्यादीनामाभासत्ववर्णनेन द्वितीयाध्याये क्रियते । प्रसादश्च कया विधया भविष्यतीत्यतः ज्ञेयमिति । ज्ञेयता च विरक्त्यादिभिः तत्प्रसत्त्यर्थं कथिता तृतीयेऽध्याये । प्रसन्नश्च कीदृशं पुमर्थं प्रयच्छतीत्यत उक्तं गम्यमिति । अनेन ज्ञानिनो भगवत्प्राप्तिलक्षणमोक्षः कथ्यते चतुर्थे अध्याये।

सर्वस्यास्य ज्ञापकत्वेन इष्टदेवता अत्र नारायणशब्देन निर्दिश्यते। भाष्यकारः स्वस्य गुरुदेवताऽभेदं सूचयति गुरूंश्चेति। अनेनैव शास्त्रस्य श्रोतृप्रवृत्त्यङ्गभूताः अधिकार्यादयः सूचिताः । ज्ञानगमनयोग्यः तदिच्छुः अधिकारी । नारायणो विषयः । तद्ज्ञानगमने प्रयोजनम् । यथायोगं सम्बन्धः ।

ब्रह्मसूत्रं प्रमाणम् , इष्टसाधनताऽवबोधकं च । अत एवोपादेयं व्याख्येयं च । निर्दोषं वाक्यं प्रमाणम् । यत् अपौरुषेयम् , आप्तिमूलं वा तत् निर्दोषम् । नारायणावतारव्यासेन कृतमिदमाप्तिमूलम् । इदं श्रुतिनिर्णायकं श्रुतियुक्तिमूलम् । अतः प्रमाणतमम् । इष्टप्राप्त्यनिष्ट-परिहारवेदकवेदनिर्णायकमिदम् इष्टसाधनतावबोधकम् ।

सूत्रेषु ब्रह्मसूत्रं विशिष्टम् । सर्वशास्त्रनिर्णायकत्वात् । तच्च सर्वशास्त्रनिर्णायकत्वं सर्वैः शब्दैः क्रियमाणनिर्णयस्य तन्मूलकत्वात् युज्यते । एवंविधसूत्रकरणमेव मनुष्यादिषु ज्ञानसंस्थापनं नाम ।



# ब्रह्मसूत्रेषु पूर्वप्रस्थाने

## प्रथमाध्यायः प्रथमः पादः

[माध्वसंप्रदाये ब्रह्मसूत्रव्याख्याने ब्रह्मसूत्रभाष्यमधिकृत्य पूर्व-प्रस्थानम् अनुभाष्यमधिकृत्य उत्तरप्रस्थानम् इति प्रस्थानभेदोऽङ्गीक्रियते । ]

अत्र द्वादश अधिकरणानि । एकत्रिंशत्सूत्राणि ।

### १. आद्यं जिज्ञासाधिकरणम्—एकं सूत्रम्

अत्राधिकरणे ब्रह्मजिज्ञासायाः कर्तव्यत्वं समर्थ्यते । अत एवास्य शास्त्रत्वम् । एतत्समर्थनं च शास्त्रस्य आरंभणीयत्वे प्रयोजकम् । जीवव्यतिरिक्तब्रह्मणः अभावात् अहमित्यनुभूयमानस्य तस्य च असन्दिग्धत्वात् ब्रह्मजिज्ञासा न कर्तव्येति प्राप्ते सिद्धान्तयत्सूत्रम् ।

॥ ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥ इति ।

'स्ववत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यते' इति आदावंते च ओंकारः । अथशब्दः मङ्गलार्थः अधिकारानन्तर्यार्थश्च । 'अ इति ब्रह्म' इत्यादिना 'तथौ प्राणदेवत्यौ भगवद्वाचकौ' इति 'सिसृक्षोः .... विष्णोः प्रथमं द्वौ विनिःसृतौ । ॐकारश्चाथशब्दश्च' (गा.) इति श्रुतिस्मृतिभिः तेषां अवश्यवक्तव्यार्थत्वात् स्वरूपोत्तमत्वाच्च प्रथमनिर्देशः तथा निर्देशनियमश्च कृतः ।

ब्रह्मजिज्ञासायां उत्तमोऽधिकारः आब्रह्मस्तम्बपर्यन्तं सर्वमसारमनित्यं चेति विज्ञानमूलकः । तत्र असारे अनित्ये च स्नेहाभावरूपं वैराग्यं विष्णवैकविषयिका भक्तिश्च निमित्तम् । वैराग्यं फलतः मिथ्याज्ञाने अनादरः । भक्तिश्च अध्ययनैकलब्धस्नेहरूपं ज्ञानम् । एतदुभयं विना जिज्ञासा न संभवति । विष्णुभक्तिरिति सर्वोत्तमतत्त्वग्रहणे एकमात्रसाधनभूते श्रुतिवाक्यार्थविचारे अध्ययनैकलब्धादरविशेषः ।

अधिकारिणो जिज्ञासा च भगवत्प्रसादैकसाध्या। भगवतः सर्वमनोवृत्तिप्रेरकत्वात् । वैराग्यभक्ती अपि तत्प्रसादेनैव । एषः सौत्रातःशब्दार्थः ।

सौत्रब्रह्मशब्दस्य वेदः तदर्थभूतं परं ब्रह्म च अर्थः । ब्रह्मणो जिज्ञासा इति जिज्ञासया वेदस्य वेदत्वं परब्रह्मणः परब्रह्मत्वं च सिध्यतीति भावः । ब्रह्मशब्देन जिज्ञासाविषयस्य सन्दिग्धत्वं समर्थ्यते । पूर्णगुणत्वं ब्रह्मशब्दार्थः । अयं च 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इति श्रुत्याऽवगतः । ब्रह्मपदव्याख्यानरूपं नारायणपदम् । तत्र ब्रह्मस्वरूपे सदेहात् जिज्ञासा कर्तव्या । अतो सूत्रार्थपूरकत्वेन कर्तव्येति पदमध्याह्रियते ।

नारायणप्रसादमृते न मोक्षः । 'तमेवं विद्वान्' (पु.) इति श्रुतेः । अत्र ज्ञानात् मोक्षः अन्यथानुपपत्त्या प्रसादादेवेति भवति । 'प्रियो हि ज्ञानिनः' (गी.) इति प्रसादैकसाध्यत्वं मोक्षस्य प्रतीयते । तत् श्रुतं च । 'यमेवैषवृणुते' (क.) इति । यमात्मा प्रसन्नस्सन् वृणुते तेनैव प्राप्यः इति श्रुत्यर्थः ।



जिज्ञासयैव ज्ञानम् । 'आत्मा वारे' (बृ.) इति दर्शनार्थं श्रवणादिरूपजिज्ञासा कार्येत्युक्तम् । 'जिज्ञासितं सुसंपन्नम्' (गा.) इति जिज्ञासापदं विचारे रूढः ।

'तमेवं विद्वान् .... नान्यः पन्थाः' 'प्रियो हि ज्ञानिनः' 'यमेवैष वृणुते' इत्यादौ अन्यनिषेधात् कर्मणा भगवत्प्रसादः अनुत्तमः । ज्ञानजन्य एव प्रसाद उत्तमः । ज्ञानस्य श्रवणाद्यन्वयव्यतिरेकित्वात् तदेव प्रधानं साधनम् । कर्म तु पारंपर्येण ।

ब्रह्मपदेन नारायण एव विवक्षितः सूत्रकारेण । तस्य अनेकार्थत्वेपि विष्णावेव मुख्यत्वम् । मुख्यमेव ग्राह्यम् । 'स विष्णुराह हि तं ब्रह्मेत्याचक्षते' इति देवमीमांसायाः निरंतरसूत्रद्वयेन सूत्रकार एव तत् सूचयति ।

विद्वद्रूढ्या स एव (विष्णुरेव) ब्रह्मशब्दस्य मुख्यः अर्थः । 'यमन्तः समुद्रे ....... तदेव ब्रह्म परमं कवीनां' (महाना. १) इति उक्तो विष्णुरेव । 'यमन्तः समुद्रे' इति विष्णुलिङ्गात् । 'तन्नो विष्णुः' (महाना. १) इति-स एवात्रोक्तं ब्रह्म । 'नामानि सर्वाणि न सन्ति लोके' (ऋ. १०) इति विष्ण्वन्यत्र नामानि सर्वाणि मुख्यतः न सन्ति । 'यो देवानां नामधा एक एव' (ऋ. १०) इति च । 'अजस्य नाभावध्येकमर्पितं' (ऋ. १०) इति विष्णुपरं सूक्तम् । पद्मनाभत्वं भगवतो प्रसिद्धम् । 'परो दिवा पर एना पृथिव्या' (ऋ. १०) इति समाख्या च । अन्येषां रमाधीनत्वात् रमायाश्च विष्ण्वधीनत्वात् । 'मम योनिरप्स्वन्तस्समुद्रे' (ऋ. १०) इति ।

रमाकारणत्वं विष्णोरेव । तथा समुंद्रान्तस्थत्वं नारायणपदमूचितम् । प्रसिद्धार्थस्य विरोधैकापोद्यत्वात् । अन्यपरत्वेन प्रतीयमानश्रुतयः वस्तुतः विष्णुपरा एव । 'वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुस्सर्वत्र गीयते' इत्युक्तेः (हरिवंशेषु) । अन्यपरपाशुपतादयः मोहार्थं कृताः । 'एष मोहं सृजाम्याशु यो जनान् मोहयिष्यति । त्वं च रुद्र .... मोहशास्त्राणि कारय । प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु ॥' इत्यादिना स्कान्दे उक्तम् । अनेन शैवे स्कान्देपि विष्णोः उत्कर्षः प्रतिपादितः इति ज्ञायते । वैष्णवेषु विष्ण्वन्यः तथा नोच्यते । तथा च सर्वाश्च श्रुतिस्मृतयः विष्णुपरा इति विष्णुरेवेदं जिज्ञास्यं ब्रह्म इति सिद्धम् ।

तदेवं जिज्ञास्यब्रह्मणः विष्णुत्वात् पूर्णगुणत्वसिद्धेः तस्य च अल्पगुणजीवव्यतिरिक्तत्वात् अत एव तस्य सन्दिग्धत्वात् तस्य विषयत्वसिद्धेः प्रयोजनादिसद्भावाच्च ब्रह्म जिज्ञासा कर्तव्या । अतः शास्त्रमारम्भणीयमेव इति सिद्धम् ॥ १ ॥ अ० ॥ १ ॥

अत्र अवश्यमारम्भणीयजिज्ञासात्मकशास्त्रप्रतिपाद्यत्वं विष्णोः महिमा उक्तः । जिज्ञासासहिष्णोर्वेदस्य विचारात्मकत्वं वैदिकजिज्ञासाया एव पुरुषार्थसाधनत्वं अर्थात् सिद्धो वेदमहिमा । अत्र सर्वत्र विष्णोर्वेदस्य वा यो महिमा उच्यते स अव्यभिचरित इति ज्ञातव्यम् ॥

## २· द्वितीयं जन्माधिकरणम् । एकं सूत्रम्

बृहजातिजीव (अमर) इत्यादिना रूढ्या जीव एव ब्रह्म ।



स्वप्रकाशत्वेन तस्य असन्दिग्धत्वात् न जिज्ञास्यता । इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं जन्माद्यस्य यतः ओं ॥ इति ।

अत्र श्रुत्युक्तब्रह्मणो लक्षणमुक्तम् । सृष्ट्याद्यष्टकमस्य जगतः यतो भवति तदेव जिज्ञास्यं ब्रह्म इति । सृष्टिः, स्थितिः, संहारः, नियतिः, ज्ञानम्, अज्ञानं, बन्धः, मोक्षः इति सृष्ट्याद्यष्टकं श्रुतिसिद्धम् । लब्धजन्मन एव स्थित्यादि । अतो जन्मनः आदित्वम् । सृष्ट्यादि 'उत्पत्तिः ....... यस्मात् स हरिः एकराट् ( स्वतन्त्रः )' इति स्कान्दे उक्तम् । 'यतो वा इमानि भूतानि ....... तद्ब्रह्म' इति तैत्तिरीये सृष्ट्यादिकर्तृत्वं तस्यैव इति । 'यः एको दाधार भुवनानि विश्वा' (ऋ. १०) इति स्थित्यादिकर्तृत्वं तस्यैव इति । 'चतुर्भिस्साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीं रवीविपत्' (ऋ. १) इति नियमनकर्तृत्वं, तदेकनिष्ठम् इति उक्तम् । 'परो दिवा' (ऋ. ७) इति लक्षणस्य अनतिव्याप्तत्वं प्रदर्शितम् । 'न ते विष्णो जायमानो न जातः देवमहिम्नः परमं तमाप' इति लक्षणस्य सार्वकालीनत्वं प्रदर्शितम् । 'यो नः पिता' (ऋ. १०) इति विष्णोः जनकत्वं स्थापितम् । एवं विष्णोः जीवविलक्षणत्वं प्रदर्श्य तस्य जिज्ञास्यत्वं समर्थितम् ॥ २ ॥ अ० ॥ २ ॥

अत्र जगज्जन्मादि कर्तुः ब्रह्मणः सर्वकर्तृत्वं जीवविलक्षणत्वं च महिमा उक्तः । तथा वेदस्य ब्रह्मकर्तृत्वैकपरत्वं श्रुत्युक्तकारणत्वेनैव जगद्विलक्षणस्य ब्रह्मणोऽवगतेः पुरुषार्थसाधनत्वमर्थात् सिद्धं वेदमहत्वम् ॥

## ३. तृतीयं शास्त्रयोनित्वाधिकरणम् । एकं सूत्रम्

अनुमानेन जगज्जन्मादिकर्तृत्वमन्यनिष्ठमिति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं शास्त्रयोनित्वात् ओं ॥ इति ।

अत्र जगज्जन्मादिकारणं नानुमानिकम् । किंतु शास्त्रैकसमधिगम्यमित्युक्तम् । तदुपपादकत्वेन 'नावेदविन्मनुते तं बृहन्तम्' (तै. ब्रा. ३) इति तस्य वेदैकवेद्यत्वं दर्शितम् । श्रुत्यादिसहकारियुक्तस्यानुमानस्य तत्र प्रामाण्यं केवलानुमानस्य अनियतप्रामाण्यं उपपादितम् । 'रेतो धातुः' इत्यादिना रेतसः शरीरमित्यादि प्रमापकैः अनुमानजीवेश्वरागमादृष्टादिसिद्धिः, 'तप' आदीनां वैदिकानां प्रत्यक्षतः फलं इत्यपि आगमप्रामाण्यसिद्धिः इति उपपाद्य 'ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् । मूलरामायणं चैव शास्त्रमित्यभिधीयते । यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् । अतोन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् इति स्कान्दे'। इत्यादिना शास्त्रं निर्दिश्य अन्येषामशास्त्रत्वं प्रसाध्य, शास्त्रं योनिः ज्ञप्तिकारणं प्रमाणम् इति शास्त्रयोनि इति सर्वकर्तृविष्ण्वाख्यब्रह्मणः शास्त्रैकवेद्यत्वं समर्थितम् ॥ ३ ॥ अ० ॥३॥

अत्र शास्त्रैकसमधिगम्यत्वं परमात्मनो महिमा उच्यते । तथा वेदस्य ब्रह्मैकविषयत्वं तथा वेदोत्पन्नज्ञानस्यैव पुरुषार्थसाधनत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ।



## ४. चतुर्थं समन्वयाधिकरणम् । एकं सूत्रम्

प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वम् इत्युपपादकं सूत्रम् ।

॥ ओं तत्तु समन्वयात् ओं ॥ इति ।

नान्येषां शास्त्रयोनित्वम् । अन्यशास्त्रयुक्त्यादिः न शास्त्रनिर्णायकः । शास्त्रवाक्यविषयकोपक्रमादय एव निर्णायकाः । तैः सम्यक् शास्त्रं विचार्यम् । तदा शास्त्रगम्यं ब्रह्मैव भवति ।

शास्त्रस्य कर्मादिः नार्थः । तस्य कर्मादिबोधकत्वेन प्रतीतस्य सर्वत्र विष्णावेव तात्पर्यात् । 'मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्य इत्यहम् । इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन' (भा.) इत्यादेः । ब्रह्मैव सर्वशास्त्रैः कारणमनन्तगुणं चेति सिध्यति इति भावः ॥४॥ ॥४॥

अत्र कारणत्वेन तदुपलक्षितानन्तगुणत्वेन च मुख्यतः सर्वशास्त्रवेद्यत्वमहिमा विष्णोरुक्तः । तथा वेदस्य कारणत्वेन तदुपलक्षितानन्तगुणत्वेन च विष्णुप्रतिपादकत्वं तथैव वेदादुत्पन्नज्ञानस्य मोक्षहेतुत्वं अर्थात् सिद्धं वेदमहत्त्वम् ।

## ५. पञ्चमं ईक्षत्यधिकरणम् । सूत्रसप्तकम्

१. 'यतो वाचो निवर्तन्ते' (तै.) इति ब्रह्म अवाच्यम् । अतो न शास्त्रमुख्यार्थ इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं ईक्षतेर्नाशब्दम् ओं ॥ इति ।

ईक्षणीयं ब्रह्म वाच्यमेव इत्युच्यते । एतच्च परोक्षतो ब्रह्म

विज्ञाय अपरोक्षतो जानीयात् इति श्रुतिसिद्धम् । ईक्षणं न प्रत्यक्षादि । ब्रह्मणः उपनिषदेकगम्यत्वात् । 'सर्वे वेदा यत्पदमामनन्ति' (क.) इति श्रुतिः तस्य वाच्यत्वं साधयति । अवाच्यत्वादिप्रतिपादनं साकल्येनागोचरतार्थकम् ॥५॥

२. जीवाख्यो गौणः दृश्यः वाच्यश्च न गुणातीतं ब्रह्म इति शङ्कां परिहरत् सूत्रम् ।

॥ ओं गौणश्चेन्नात्मशब्दात् ओं ॥ इति ।

ईक्षणीये तस्मिन्नेव 'आत्मानं पश्येत्' (बृ.) 'अज आत्मा' (क.) इति आत्मशब्दश्रवणात् तच्छब्दस्य च मुख्यार्थे निर्गुणे (सत्वादिगुणरहिते) संभवात् न गौणाश्रयणं युक्तम् इत्यर्थः ॥६॥

३. आत्मशब्दस्य गौणे मुख्यत्वशङ्कां परिहरत् सूत्रम् ।

॥ ओं तन्निष्ठस्य मोक्षोपदेशात् ओं ॥ इति

आत्मनिष्ठस्य मोक्षोपदेशात् मोक्षस्य गुणनिवृत्तिरूपत्वात् । 'यस्यानुवित्तः प्रतिबुद्ध आत्मा अस्मिन् सन्दोघे गहने प्रविष्टः। स विश्वकृत्' (बृ.) इति श्रुतेः सर्वकर्तृत्वात् स वायुकर्ता सर्वज्ञः अस्मिन् देहे गुहास्थाने प्रविष्टः आत्मा येन ज्ञातः तस्य प्राप्यत्वाच्च नात्मशब्दः गौणपर इत्युक्तम् । यतः आत्मज्ञानात् मोक्षः अतः स आत्मशब्दः विष्णोरन्यत्र न वर्तते । विष्णोः परत्वात् स्वतन्त्रत्वात् इति भावः ।

४. अत्र युक्तिप्रतिपादकं सूत्रम् ।

॥ ओं हेयत्वाऽवचनाच्च ओं ॥ इति



'तमेवैकं जानथ आत्मानम्' (मुं.) इति विष्णोः अहेयत्ववचनात् गौणस्य च हेयत्ववचनात् नात्मशब्दः गौणपरः । अतः स एव आत्मा विष्णुः ईक्षतिश्रुत्युक्तः वाच्यश्च इति भावः ॥ ८ ॥

५. निर्गुणस्य वाच्यत्वे युक्तिप्रतिपादकं सूत्रम् ।

॥ ओं स्वाप्ययात् ओं ॥ इति ।

'पूर्णमदः' (बृ.) इति प्रलयेपि मूलरूपं अन्यत्रालीनं स्वयमवशिष्यते । न चायं गौणः पूर्णत्वात् । स्वस्य स्वस्मिन् लयाच्च । गौणो न तथा इति भावः ।

यदि स्वाप्ययवान् गौणः तर्हि प्रलये सः गौणः निर्गुणश्च भवेताम् । एकः अन्यस्मिन् वा लीयेत । आद्यः पक्षः 'इदं वा अग्रे नैव किंचनासीत्' (बृ.) इति श्रुतिबाधितः । द्वितीयेपि गौणस्य स्वाप्ययात् निर्गुणस्य तस्मिन् लयो वाच्यः । स च अनुपपन्नः । निर्दोषस्य दोषिणि गौणे लयस्य अयुक्तत्वात् । अतो अनन्यलीनः निर्गुण एव । स एव वाच्यश्च । अत्र गुणशब्दः सत्वादिपरः ॥९॥

६. श्रुतीनामानन्त्येन कथमत्र निर्णयः इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं गतिसामान्यात् ओं ॥ इति ।

श्रुत्या स्वयमेव सर्वशाखादिभिः उत्पाद्यस्य ज्ञानस्य एकविधत्वं कथ्यते 'सर्वे वेदाः' इति । इत्यर्थः ॥१०॥

७. ब्रह्मणो निर्गुणस्य वाच्यत्वे युक्त्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं श्रुतत्वाच्च ओं ॥ इति ।

'केवलो निर्गुणश्च' (श्वे.) इति निर्गुणः श्रुतः । अतः नासौ अशब्दः । ब्रह्मणो लक्षणया श्रुतत्वं इति न संभवति । तस्य सर्वशब्दावाच्यस्य लक्ष्यत्वासंभवात् इति भावः ॥ ११ ॥ अ० ॥ ५ ॥

वाच्यत्वमत्र ब्रह्मणो महिमोच्यते । तथा वेदस्य मुख्यतः ब्रह्मैकवाचकत्वं तथैव वेदोत्पन्नस्य सर्वशब्दमुख्यार्थभूतब्रह्मज्ञानस्य मोक्षहेतुत्वं अर्थात् सिद्धं वेदमहत्वम् ।

एतदधिकरणपञ्चकं अध्यायपादपीठतया सर्वशास्त्रोपकारकमिति गण्यते ।

## ६. षष्ठं आनन्दमयाधिकरणम् । सूत्राष्टकम्

तत्तु समन्वयादित्युक्तरीत्या शास्त्रीयशब्दान् प्रतिवाक्यग्रहणेन उपक्रमाद्यन्वयात् सम्यङ् निरूपणं अनेनाध्यायेन क्रियते । शब्दाः चतुर्विधाः । अन्यत्रैव प्रसिद्धाः, उभयत्र प्रसिद्धाः, अन्यत्र प्रसिद्धाः, तत्प्रसिद्धाश्च । सर्वेऽपि नामलिङ्गात्मकतया द्विविधाः । धर्मिवाचकाः शब्दाः नामात्मकाः । धर्मविशिष्टधर्मिवाचकास्तु लिंगात्मकाः । अत्र पादे प्रायेण अन्यत्र प्रसिद्धानां नामात्मकानां शब्दानां समन्वयः क्रियते ।

१. जिज्ञास्यं ब्रह्म तैत्तिरीये आनन्दमयपुच्छत्वेन प्रतीयते 'ब्रह्म पुच्छं प्रतिष्ठा' इति । अवयवस्य अतएवाप्रधानस्य तस्य अजिज्ञास्यता इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं आनन्दमयोभ्यासात् ओं ॥ इति ।

अत्रैव तैत्तिरीये 'असद्ब्रह्मेति वेद चेत्' 'अस्ति ब्रह्मेति



चेद्वेद' इति आनन्दमये ब्रह्मशब्दाभ्यासः श्रूयते । ब्रह्मशब्दश्च विष्णुनिष्टः । अतो विष्णुरेव आनन्दमयः । विरिञ्चितरेषां ब्रह्मशब्दामुख्यार्थत्वात् तेषामग्रहणात् इति भावः ॥१२॥

२. प्राचुर्यार्थेमयट् विधानात् आनन्दमयशब्दस्य विष्णुपरत्वं साधयत् सूत्रम् ।

॥ ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ ॥ इति ।

आनन्दमयशब्दोऽसौ न विकारार्थकः । किंतु प्राचुर्यार्थकः । अतो आनन्दमयस्य विष्णुत्वं समर्थितम् । अन्नमयादिष्वपि स एव न्यायः इति अन्नमयादिशब्दवाच्योपि विष्णुरेव इति भावः ॥ १३ ॥

३. तत्रैव हेत्वन्तरं प्रतिपादयत् सूत्रम् ।

॥ ॐ तद्धेतुव्यपदेशाच्च ॐ ॥ इति ।

'कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' (तै.) इति लोकचेष्टकत्वहेतुव्यपदेशात् विष्णुः पूर्णानन्दः आनन्दमयः इत्युच्यते इति भावः । विष्णोः पूर्णत्वात् आनन्दपूर्णत्वेद्रेक एव सृष्ट्यादिना जगच्चेष्टकः ॥ १४ ॥

४. ब्रह्मणः पुच्छत्वोक्त्या अपरब्रह्मणि ब्रह्मशब्दः इति आशङ्कां परिहरत् सूत्रम् ।

॥ ॐ मान्त्रवर्णिकमेव च गीयते ॐ ॥ इति ।

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.) इत्यत्र सत्यज्ञानानन्तशब्दानां अन्नमयादीनां च एकार्थकत्वमुक्तम् । 'सत्यं ज्ञानं' इति ब्रह्मस्वरूपं,

'यो वेद' इति वेदनं, 'सोऽश्नुते' इति प्राप्तिः इति मन्त्रवर्णे ब्रह्मैव उच्यते। तदेव अन्नमयादिभिः उक्तमिति अर्थानुसन्धानेन प्रतीयते। अवयवावयविनोः अभेदः, अघटितघटिकेश्वरशक्तिः, अतर्क्यत्वम्, अपरिच्छिन्नत्वं, सर्वत्र सारभूतत्वं बहुरूपत्वं च अत्रैव श्रुतौ प्रतीयमानं प्रकृतार्थसाधकम् इति भावः ॥ १५ ॥

५. तत्रैव अनन्यथासिद्धहेत्वन्तरं प्रतिपादयत् सूत्रम्।

॥ ओं नेतरो अनुपपत्तेः ओं ॥ इति।

'ब्रह्मविदाप्नोति परम्' (तै.) इति आनन्दमयादिज्ञानेन मोक्षः श्रूयते। स च विष्ण्वन्यज्ञानान्नोपपद्यते 'तमेवं विद्वान्' (पु.) इति श्रुतेः। अतो विष्णुरेव आनन्दमयः इत्यर्थः ॥ १६ ॥

६. इतरेषां आनन्दमयत्वं निराकुर्वत् सूत्रम्।

॥ ओं भेदव्यपदेशात् ओं ॥ इति।

तैत्तिरीयोक्तरीत्यैव 'ते ये शतम्' इति चतुर्मुखादिः न आनन्दमयः अपरिमितानन्दः। अतएव 'अदृश्ये अनात्म्ये,' 'स यश्चायं पुरुषे' इति भेदव्यपदेशात् ब्रह्मणो न जीवाभेदः। 'नामानि सर्वाणि' इत्यादिना तत्त्वमस्यादिशब्दाः विष्णुवाचका एव। अतः स्वामित्वार्थतया अद्वैतश्रुतयः योज्याः। अन्तर्यामित्वात् 'असर्वः सर्वः' इति असर्वस्य सर्वत्वोक्तिः युक्ता। 'विमुक्तश्च विमुच्यत' (क. २.) इति बन्धस्य अस्वाभाविकत्वात् युज्यते। 'मुक्तिर्हित्वा अन्यथारूपं स्वरूपेण व्यवस्थितिः' (भा.) इत्युक्तेः। अज्ञानमूलत्वमेव अस्वाभाविकत्वम् इति भावः ॥ १७ ॥



७. अद्वैतमनुमानसिद्धमित्याशङ्कां परिहरत् सूत्रम्।

॥ ओं कामाच्च नानुमानापेक्षा ओं ॥ इति।

पृथगनुमानं कामगामि। अतो अदृष्टविषये अनपेक्षितम्। 'नैषा तर्केण' (क. २.) इति ब्रह्मविषया मतिः तर्केण आनेया आपाद्या अपनेया निराकार्या च न भवति इत्यर्थः ॥ १८ ॥

८. आनन्दमयस्य जीवभिन्नत्वं साधयत् सूत्रम्।

॥ ओं अस्मिन् अस्य च तद्योगं शास्ति ओं ॥ इति।

अस्मिन् प्रकरणे तैत्तिरीयश्रुतिः अस्य जीवस्य आनन्दमयेन सह मुक्तावपि सम्बन्धं शास्ति। 'सोऽश्नुते ……… सह ब्रह्मणा' इति। अतः जीवभिन्नं ब्रह्मैव अन्नमयादिपञ्चरूपम् इति भावः ॥ १९ ॥ अ० ॥ ६ ॥

अत्र आनन्दमयत्वादिकं ब्रह्मणो महिमा उच्यते। तथा वेदस्य सर्वत्र प्रतिपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्त्वम्।

## ७. सप्तमं अन्तस्थाधिकरणम्। सूत्रद्वयात्मकम्।

१. 'अदृश्ये' इति आनन्दमयस्योक्तम् अदृश्यत्वम् तच्च। 'सद्वैव सन्तं न विजानन्ति देवाः' (तै. आ. ३.) इति कस्यचिदन्तस्थस्य प्रतीयते। आनन्दमयत्वमपि तस्यैवेति तदवयवभूतब्रह्मणो अजिज्ञास्यता इति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ओं अन्तस्तद्धर्मोपदेशात् ओं ॥ इति ।

अत्रैव समुद्रस्थत्वब्रह्माण्डवीर्यत्वादिविष्णुधर्माः 'अन्तः समुद्रे' (तै. आ. ३.) इत्यादिना श्रूयन्ते । अतः प्रलयार्णवस्थात् विष्णोः पुरुषात् प्रकृतिचेतनात्मकजगत् ब्रह्माण्डं च जातम् इत्यर्थकवाक्येन तस्य अन्तस्थत्वलिङ्गसमर्थनात् तद्रूपेण प्रसक्तेन्द्राद्यधिदैवनामानि विष्णौ समन्वितानि भवन्ति इति भावः ॥ २० ॥

२. विष्णोः अन्तःस्थितेन्द्राद्यभेदाशङ्कां पराकुर्वत् सूत्रम् ।

॥ ओं भेदव्यपदेशाच्चान्यः ओं ॥ इति ।

तस्य विष्णोः 'इन्द्रस्यात्मा निहितः' (तै. आ. ३.) इत्यादिना इन्द्राद्यन्तर्यामित्वेन तेभ्यो इन्द्रादिभ्यः तस्य भेदव्यपदेशात् सो अन्यः । इन्द्रादिशब्दाः भगवत्येव मुख्याः । परमैश्वर्यादीनां तत्र निरवधिकत्वात् । अन्यगतानां तेषां तदधीनत्वात् इति भावः । अत्र लिङ्गसमन्वयेन इन्द्रादिबहुनामसमन्वयः कृतः । अतो अधिदैवगत-शब्दवाच्यः अन्तःप्रविष्टः अदृश्यः आनन्दमयश्च हरिरेवेति स एव जिज्ञास्यः इति सिद्धम् ॥ २१ ॥ अ० ॥ ७ ॥

अत्र अन्तस्थत्वमहिमा विष्णोरुक्तः । तथा वेदस्य सर्वत्र अन्तस्थत्वमहिम्नः प्रतिपादनं तथैव वेदोत्पन्नज्ञानेन मोक्ष इति अर्थात् सिद्धं वेदमहत्वम् ।

### ८. अष्टमं आकाशाधिकरणम् । एकं सूत्रम् ।

तैत्तिरीये 'यदेष आकाश आनन्दो न स्यात्' इति उक्तस्य छान्दोग्ये 'अस्य लोकस्य का गतिरिति आकाश इति होवाच' इति उक्तम् । अयं च भूताकाशः । पृथिवीगतित्वोपपादनाय उक्तत्वात् । तथा च रूढ्या स एवानन्दमयः जिज्ञास्यश्च इति प्राप्ते सिद्धान्तयत् सूत्रम् ।



॥ ओं आकाशस्तल्लिङ्गात् ओं ॥ इति ।

अत्रैव (छान्दोग्ये १.) 'स एष परो वरीयान् उद्गीथः स एषो अनन्तः' इति विष्णुलिङ्गात् विष्णुरेव आकाशः आनन्दमयः जिज्ञास्यश्च इत्यभिहितम् । 'नभो ददाति श्वसतां मार्गं यन्नियमात्' इति जडस्य आकाशस्य पराधीनत्वं स्पष्टमेव । अत एव तत्रोक्तभूत-कारणत्वं तु विष्णोरेव इति भावः । अयं आकाशशब्दः आधिभौतिक सर्वशब्दोपलक्षकः । महायोगविद्वद्रूढ्या तद्वाच्यः विष्णुरेवानन्दमयः जिज्ञास्यः इति सिद्धम् । अत्र सर्वत्र लिङ्गं निरवकाशं श्रुतिः सावकाशा । अत एव लिङ्गेन श्रुत्यर्थबाधः ॥ २२ ॥ अ० ॥ ८ ॥

अत्र सर्वोत्तमत्वं भगवन्महिमा उक्तः । वेदस्य तु प्रतिवाक्यं तन्महिम्नः प्रतिपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ।

### ९. नवमं प्राणाधिकरणम् । एकं सूत्रम् ।

'तद्वै त्वं प्राणो अभवः महान् भोगः प्रजापतेः' (तै. आं. ३) इति लोकप्रसिद्धप्राणशब्दितमुख्यवायोः महाभोगात् स एव आनन्दमयः जिज्ञास्यश्चेति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं अत एव प्राणः ओं ॥ इति ।

तत्र 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ ' (तै. आ. ३) इति विष्णुलिङ्गात् विष्णुरेव प्राणः। स एव महाभोगशब्दितपरमानन्दः जिज्ञास्यश्च । 'ईशानः प्राणदः प्राणः' इति विद्वद्रूढिमहायोगात् । प्राणगतजीवनकारणत्वं विष्ण्वधीनम् । 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतौ उपाश्रितौ ' इत्यादेः इति भावः । अत्र विद्वद्रूढिमहायोगयुक्तनिरवकाशलिङ्गेन श्रुतिबाधः । अतः प्राणोपलक्षितसकलाध्यात्मिकशब्दवाच्यो विष्णुः आनन्दमयः जिज्ञास्यश्च इति भावः ॥ २३ ॥ अ० ॥ ९ ॥

अत्र विष्णोः महाभोगमहिमा उक्तः। तथा सर्वत्र विष्णोः महाभोगप्रतिपादनं वेदस्य, तथैव वेदोत्पन्नज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## १०. दशमं ज्योतिरधिकरणम् । एकं सूत्रम् ।

'यो वेद निहितं गुहायाम् ' (तै. २.) इति आनन्दमये उक्तम् । तच्च गुहानिहितत्वं 'वि मे कर्णा पतयतो वि चक्षुर् वीऽदं ज्योतिः हृदय आहितं यत् ' (ऋ. ६.) इति ज्योतिषः प्रतीयते । अस्य अग्निसूक्तत्वात् अग्निरेव ज्योतिः । अतः स एव आनन्दमय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं ज्योतिश्चरणाभिधानात् ओं ॥ इति ।

विष्णुरेव ज्योतिः । स हि 'परोमात्रया तन्वा वृधाना '



(ऋ. ७.) इति मीयंत इति मात्रा इति इन्द्रियगणात् परः । अतः स एव ज्योतिः । अतः स एव गुहानिहितः आनन्दमयो जिज्ञास्यश्च इत्युक्तम् इति भावः ॥ २४ ॥ अ० ॥ १० ॥

अत्र सर्वातीतत्वरूपं ज्योतिष्ट्वं विष्णोः महिमा उक्तः । तथा प्रतिवाक्यं सर्वातीतत्वमहिम्नः प्रतिपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ११. एकादशं छन्दोऽधिकरणम् । सूत्रत्रयात्मकम् ।

१. ॥ ओं छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्
तथा हि दर्शनम् ओं ॥ इति ।

हृदयनिहितं ज्योतिः विष्णुरित्युक्तम् । तत् ज्योतिः छान्दोग्ये 'गायत्री वा इदं सर्वम् ' (छां. ३.) इति आरभ्य 'अथ यदतः परो दिवो ज्योतिः दीप्यते ... .... तदिदमस्मिन् पुरुषे ज्योतिः इत्युक्तम् । अतः इयं गायत्री विष्णोरन्या । ज्योतिरप्यतः विष्ण्वन्यम् । तेन गुहानिहितं आनन्दमयशब्दितं जिज्ञास्यं च अन्यमिति शङ्का-परिहाराय इदं सूत्रं प्रवृत्तम् । तत्र विष्णुरेव गायत्री । गायत्रीशब्दित-गुणस्वरूपत्वेन उपासनार्थम् उक्तत्वात् । आदिपदेन वाचः ग्रहणम् । गायत्र्याः गानत्राणकर्तृत्वं लिङ्गं श्रूयते । तच्च न छन्दसि । पौराणिक-रूढ्या श्रुत्युक्तयोगेन गायत्र्याः विष्ण्वधीनत्वात् विष्णुरेव गायत्री-शब्दमुख्यार्थः । नित्यायाः गायत्र्याः पराधीनत्वं 'स्वभावजीवकर्माणि

द्रव्यं कालः श्रुतिः क्रियाः। यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया इति श्रुतिसिद्धम् इति भावः ॥ २५ ॥

२. तत्र हेत्वन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं भूतादिपादव्यपदेशोपपत्तेश्चैवम् ओं ॥ इति ।

गायत्र्याः चतुष्पदत्वं व्यपदिश्य 'तदेतदृचाभ्यनूक्तं तावानस्य महिमा' ( छां. ३. ) इति पुरुषसूक्तमन्त्रः संवादाय उदाह्रियते । अतः गायत्री विष्णुरेव । तदन्यत्र अस्य शब्दस्य अनुपपन्नत्वात् । अत्रायं विवेकः । अमृतपादत्रयं विष्ण्वभिन्नम् । भूतपादत्वं तु भिन्नमेव । तत्पादपरिमितसामर्थ्यं पादतयोच्यते । 'सुवर्णं कोशम्' ( तै. आ. ३. ) इत्यादिना पादशब्दोक्तं विश्वं एकदेशपरिमितम् । पुरुषसूक्तोक्तः स एव । तत्र यज्ञशब्दात् । 'यज्ञो विष्णुः' इति यज्ञशब्दस्य विष्णुपरत्वात् । 'यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते' इति स्कान्दस्मृतिश्च इममेवार्थं साधयति इति भावः ॥ २६ ॥

३. उक्तमाक्षिप्य परिहरत्सूत्रम् ।

॥ ओं उपदेशभेदान्नेति चेन्न उभयस्मिन्नपि अविरोधात् ओं ॥ इति ।

'त्रिपादस्य अमृतं दिवि' ( छां. ३. ) इति सप्तमीप्रयोगः गायत्र्याः विषये । 'परो दिवः' ( छां. ३. ) इति पञ्चमीप्रयोगः ज्योतिषः विषये श्रूयते । इति उपदेशभेदात् भिन्ने वस्तुनी अत्र उच्येते इति आक्षेपः । विवक्षाभेदेन सप्तमीपञ्चम्योः एकार्थत्वमिति परिहारः ॥ तस्मात् गायत्री ज्योतिः । तच्छन्दत्नोधितः विष्णुरेव । स एव आनन्दमयः जिज्ञास्यश्च इति सिद्धान्तितम् ॥ २७ ॥ अ० ॥ ११ ॥



अत्र नित्यत्वगायत्रीत्वादिमहिमा विष्णोरुक्तः । तथा सर्वैस्यापि वेदस्य नित्यत्वगायत्रीत्वादिप्रतिपादनं तथैव वेदोत्पन्नज्ञानस्य पुरुषार्थसाधनत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

## १२. द्वादशम् अन्तिमप्राणाधिकरणम् । सूत्रचतुष्टयात्मकम् ।

१. 'चक्षुः श्रोत्रं मनो वाक्प्राण' ( ऐ. आ. २. ) इति प्राणस्य इन्द्रियत्वात् स न विष्णुरिति पूर्वोक्तोपि तथैवेति तस्यैव आनन्दमयत्वमिति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं प्राणस्तथानुगमात् ओं ॥ इति ।

'तं देवाः प्राणयन्त स एषोसु स एष प्राणः' (ऐ. आ. २.) 'प्राणऋच इत्येव विद्यात् ,' 'हृदयं प्राणोऽधितिष्ठति' इति देवतोपास्यत्वादिविष्णुलिङ्गाभ्यासात् प्राणो विष्णुरेव इत्यर्थः ॥

२. उक्तमाक्षिप्य समादधत् सूत्रम् ।

॥ ओं न वक्तुरात्मोपदेशात् इति चेत् अध्यात्मसंबन्धभूमाह्यस्मिन् ओं ॥ इति ।

'प्राणो वा अहमस्मि ऋषे' ( ऐ. आ. २. ) इति वक्तुः आत्मोपदेशादिन्द्र एवेति चेन्न । नेन्द्रोयं प्राणः किन्तु विष्णुरेव । अस्य प्राणस्य अध्यात्मत्वेन अन्तर्यामित्वेन सर्वगतत्वेन च उक्तेः । 'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इति बह्वध्यात्मसंबन्धोऽत्र श्रूयते ॥ २९ ॥

३. कथं विष्णौ अंतर्याहंशब्द इत्याशङ्कां निवारयत् सूत्रम्।

॥ ओं शास्त्रदृष्ट्या तूपदेशो वामदेववत् ओं ॥ इति।

'शास्त्रम् अन्तर्यामि।' 'संविच्छास्त्रं परं पदम्' इति भागवते। विष्णोः अन्तर्यामित्वात् तत्र अहमित्यादिशब्दप्रयोगः युक्त एव। 'अहं मनुरभवं सूर्यश्च' (ऋ. २.) इति श्रुतेः। 'तत्तन्नाम्नोच्यते विष्णुः सर्वशास्तृत्वहेतुतः' इति सर्वशब्दानामन्तर्यामिण्येव मुख्यत्वं इति भावः॥ ३०॥

४. 'प्राणो ह्येष ...... शतं वर्षाणि पुरुषायुषो भवन्ति' (ऐ. आ. २.) इति शतायुष्ट्वरूपजीवलिङ्गात् प्राणसंवादादिना मुख्यप्राणलिङ्गाच्च जीव एवायं प्राण इत्याशङ्कां पराकुर्वत् सूत्रम्।

॥ ओं जीवमुख्यप्राणलिङ्गान्नेति चेन्न उपासात्रैविध्यात् आश्रितत्वात् इह तद्योगात् ओं ॥ इति।

'तावंति शतसंवत्सरस्य' (ऐ. आ. २.) इति जीवलिङ्गं प्राणसंवादादिमुख्यप्राणलिंगमत्र वर्तते इति चेन्न। लिङ्गानां तदन्तर्यामिभगवत्परत्वात् विष्णुरेवायं प्राण इत्युक्तम्। अत्र पुरुषाणां विविधोपासनयोग्यत्वात् अन्तरादिभेदेन भगवदुपासनस्य त्रैविध्यात्। एतत्प्रकरणे तत्त्रैविध्यस्योक्तत्वादिति भावः। 'अग्नौ क्रियावतां विष्णुः योगिनां हृदये हरिः। प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्' इति ब्राह्मवचनात् उपासनत्रैविध्यमवगम्यते॥ ३१॥ अ०॥ १२॥



अत्र विष्णोः त्रिविधोपासाविषयत्वं महिमा उक्तः। तथा प्रतिवाक्यं उपासायाः विष्ण्वेकविषयत्वं तथैव वेदोत्पन्नज्ञानस्य पुरुषार्थसाधनत्वम् अर्थात् सिद्धं वेदमहत्वम्॥

पादस्यास्योपसंहारप्रकरणे सूत्रार्थत्वेन ग्राह्यस्य मुख्यो भागः आद्यपञ्चाधिकरणान्यधिकृत्य किञ्चिन्निरूप्यते। अत्र सर्वत्र विज्ञेयं ब्रह्म श्रुत्युक्तम्। प्रथमे ब्रह्मणः जिज्ञास्यत्वमभिहितम्। तेन जिज्ञासां विना प्राप्तस्य अब्रह्मत्वमुच्यते। तथा जिज्ञास्यत्वमनतिव्याप्तमित्यपि सूच्यते। द्वितीये ब्रह्मणः कारणत्वमुदाहृतम्। तेन ब्रह्मणोऽन्यस्य सर्वथा कार्यत्वमवगम्यते। तृतीये ब्रह्मणः शास्त्रैकगम्यत्वं समर्थ्यते। तेन ज्ञायते शास्त्रं न ब्रह्मातिरिक्तपरमिति। चतुर्थे ब्रह्मणः उपक्रमादिना शास्त्रशब्दप्रतिपाद्यत्वमुक्तम्। अनेन ज्ञायते नान्यस्य तदिति। पञ्चमे ब्रह्मणः वाच्यत्वं प्रदर्श्यते। अनेन ब्रह्मान्यदशब्दमिति ज्ञायते। ब्रह्मण्यशब्दत्वश्रुतिस्तु साकल्येनागोचरत्वाभिप्रायिका। इदं सर्वं श्रुत्युक्तब्रह्मणो श्रुत्युक्तविष्णुत्वज्ञापकम्। अयमेव न्यायः सर्वत्र सूत्रार्थेऽनुसन्धेयः इति।

इत्याद्ये प्रथमे पादे सूत्राणामर्थसंग्रहः।
कृतोऽयं राघवेन्द्रेण भूयाद्व्यासप्रसत्तये॥

---

ॐ तत्सत्

श्री वेदव्यासाय नमः। श्रीगुरुभ्यो नमः। हरिः ॐ।

# ब्रह्मसूत्राधिकरणार्थसंग्रहः

## प्रथमाध्याये प्रथमः पादः

---

नत्वा सूत्रकृदं व्यासं मध्वं भाष्यकृदं तथा।
टीकाकारं जयार्यं च शेषार्यान्मद्गुरूनपि ॥ १ ॥
व्यासप्रसादतस्सूत्रभाष्यटीकानुचिन्तनम्।
पुरुषार्थप्रदं ब्रह्मज्ञानं कार्यं तदित्यतः ॥ २ ॥
विदुषा राघवेन्द्रेण राजधर्माधिकारिणा।
प्राच्येषु च प्रतीच्येषु तत्त्वशास्त्रेष्वशेषतः ॥ ३ ॥
एम्. ए. स्थानविशिष्टेन नित्यं शास्त्रोपजीविना।
क्रियते ब्रह्मसूत्रेष्वधिकरणार्थसंग्रहः ॥ ४ ॥

### पीठिका

समग्राणां च सूत्राणामर्थमाश्रित्य मुख्यतः।
सूत्रतात्पर्यबोधाय पीठिकेयं निरूप्यते ॥ ५ ॥
यथार्थं सुखदं ज्ञानमयथार्थमनर्थदम्।
अतो विचार्यमेवेदं यथार्थज्ञानसाधनम् ॥ ६ ॥
ब्रह्मसूत्रं परं मानं तस्य च न्यायरूपतः।
तदेव ब्रह्ममीमांसा मीमांसा मेयशोधनम् ॥ ७ ॥



बलाबलादिचिन्तादि प्रमाणानां तु शोधनम्।
यतो मानमुखेनैव मेयचिन्तात्र कार्यते ॥ ८ ॥
अतश्च ब्रह्ममीमांसा मानशास्त्रं प्रधानतः।
स्वतन्त्रमस्वतन्त्रं वा मेयं ज्ञेयं हि सर्वथा ॥९॥
स्वायत्तं तत्स्वतन्त्रं स्यात् सत्ताज्ञानप्रवृत्तिषु।
अन्यथा परतन्त्रं स्यात् प्रकारोऽन्यो न विद्यते ॥ १० ॥
अतो मेयं च सर्वत्र ह्यतीन्द्रियविशेषितम्।
तस्माच्छब्दैकवेद्यं तदन्वयादिसहायतः ॥ ११ ॥
अतश्च ब्रह्ममीमांसा शब्दशास्त्रमितीर्यते।
वेद्यं सर्वमिदं नित्यं संप्रदायविदो गुरोः ॥ १२ ॥
ब्रह्म वेदोऽथ तस्यार्थः परं ब्रह्माखिलोत्तमम्।
वेदस्त्वपौरुषेयो हि नित्यो निर्दोष एव च ॥ १३ ॥
अतस्स्वतःप्रमाणं स तस्यार्थो नैव बाध्यते।
याथार्थ्यमेव प्रामाण्यं तच्च वेदस्य सर्वतः ॥ १४ ॥
अक्षादिर्हि प्रमाणं स्यात् प्रवृत्तो वेदमाश्रितः।
वेदस्यातीव गांभीर्याच्छब्दतश्चार्थतोऽपि च ॥ १५ ॥
वाक्यार्थो दुर्ग्रहस्तस्माद्व्यवस्थाविषयेष्वतः।
तत्रोक्तन्यायसंचारादर्थो निर्णीततां गतः ॥ १६ ॥
वेदाः प्रमाणमित्येतदर्थैकत्वस्य साधकम्।
ब्रह्मैव हि तदर्थोऽयं वेदेनैव सुनिश्चितः ॥ १७ ॥

ब्रह्मशब्देन पूर्णत्वं तद्गुणानां च सिध्यति ।
पूर्णत्वसाधने वेदे विष्णुत्वं तस्य दर्शितम् ॥ १८ ॥
अतश्च ब्रह्मशब्दोऽसौ विष्णुपर्याय एव हि ।
देशकालगुणेभ्यश्चानन्तं पूर्णमिहोच्यते ॥ १९ ॥
सर्वसत्ताप्रदत्वेन तच्च संसाधितं पुनः ।
ब्रह्मशब्दो यतो विष्णौ विष्णुशास्त्रमिदं श्रुतम् ॥ २० ॥
वेदसिद्धं हि पूर्णत्वमन्यथा लौकिकं भवेत् ।
विष्णुरूपं हि कर्तृत्वं पूर्णत्वं तेन साधितम् ॥ २१ ॥
तथा वेदमहत्वं तु विष्णवर्थे तत्प्रवृत्तितः ।
वेदविष्ण्वोस्तु माहात्म्यं यो वेद स्नेहयोगतः ॥ २२ ॥
सर्वेऽस्य पुरुषार्थास्स्युरिति सूत्रार्थसंग्रहः ।
सूत्रं शास्त्रं यतोह्यत्र वेदवेदार्थनिर्णयः ॥ २३ ॥
इदमत्रावधार्यं स्यात् यत्सूत्रे लिंगमुच्यते ।
श्रुतेर्दर्शनतश्शब्दात् स्मृतेराचारतस्त्विति ॥ २४ ॥
तत्तु सूत्रेण निर्णीतं सूत्रस्य न्यायरूपतः ।
निर्णायकस्य सूत्रस्य प्रामाण्यं सर्वतोधिकम् ॥ २५ ॥
तस्मात्सूत्रं विना कश्चित् शब्दार्थो नैव युज्यते ।
इति सर्वत्र विज्ञेयं वैदिके लौकिकेपि वा ॥ २६ ॥
ब्रह्मसूत्रप्रवृत्तेश्च स्कान्दे तूक्तस्त्वयं क्रमः ।
वेदोऽभूत्कालतोत्सन्नः शापतो गौतमस्य च ॥ २७ ॥



ब्रह्माद्याश्शरणं जग्मुः विष्णुं व्यासस्सचाभवत् ।
व्यासो वेदं समुद्धृत्य पुनर्वेदार्थसिद्धये ॥ २८ ॥
निर्ममे ब्रह्मसूत्राणि तानि सूत्राणि मुख्यतः ।
एवं संसाधितं ज्ञानं प्राणिनां पुरुषार्थदम् ॥ २९ ॥
अस्योपपादनं सृष्टिः वक्त्यसौ पूर्णतां हरेः ।
यतो मीमांसितं किंचित् सर्वमाश्रित्य तिष्ठति ॥ ३० ॥
प्रमाणं वेद एवैकः ब्रह्म चैकमिति श्रुतम् ।
अतश्च ब्रह्ममीमांसा सर्वशास्त्रोद्भवादिदा ॥ ३१ ॥
तत्राध्यायाश्च चत्वारोऽध्याये पादचतुष्टयम् ।
सूत्राणीमानि चातेषु (५६४) तत्र सन्ति नयाः पुनः ॥
गरारी (२२३) च ततोऽध्यायश्चादिमोऽत्र समन्वयः ।
अविरोधो द्वितीयस्तु तृतीयं साधनं मतम् ॥ ३३ ॥
चतुर्थश्च फलाध्यायस्त्वादिमं नयपञ्चकम् ।
अध्यायपादपीठं सत् सर्वशास्त्रं नियामयेत् ॥ ३४ ॥
ततः समन्वयः प्रोक्तः यत्रासावन्वयः कृतः ।
सूत्रे सूत्रे नये चापि तस्यैव महिमोच्यते ॥ ३५ ॥
तत्तच्छब्दस्य वाच्योऽयं निमित्तगुणपूर्तितः ।
स्वातन्त्र्यं पूर्तितस्सिद्धं सर्वस्यापि प्रवर्तकम् ॥ ३६ ॥
स्वातन्त्र्यमेव माहात्म्यं विष्णोर्ब्रह्मत्वसाधकम् ।
अतस्सर्वत्र सूत्रार्थे स्वातन्त्र्यं साधयेत्सुधीः ॥ ३७ ॥

अत्राधिकरणन्यायान्महिम्नां संग्रहः कृतः ।
आदावन्ते च ॐकारः प्रतिसूत्रं विवक्षितः ॥ ३८ ॥
श्रुत्यैव मङ्गलार्थोऽसौ विष्णोः पूर्णत्ववाचकः ।
पूर्वप्रस्थानमाश्रित्य विषयोऽत्र निरूप्यते ॥ ३९ ॥
सर्वांशे विषयो ह्यत्र भाष्यटीकाप्रमाणकः ।
१ अथातो ब्रह्मजिज्ञासेत्याद्याधिकरणं विदुः ॥ ४० ॥
मङ्गलार्थोऽथशब्दोऽधिकारानन्तरभाविताम् ।
जिज्ञासाया वदत्यद्धा प्रसादादित्यतो हरेः ॥ ४१ ॥
ततस्तु ब्रह्मजिज्ञासा कर्तव्येति च लभ्यते ।
ब्रह्मणो ज्ञानमुद्दिश्य वेदवाक्यार्थचिन्तनम् ॥ ४२ ॥
जिज्ञासापदलब्धार्थः श्रवणं मननं तथा ।
निदिध्यासनमित्येवं जिज्ञासापदबोधितम् ॥ ४३ ॥
त्रयेणानेन वेदार्थः निर्णीतो भवति ध्रुवम् ।
निर्णयोऽयं हि विष्णुत्वं श्रुत्युक्तब्रह्मणो वदेत् ॥ ४४ ॥
श्रुत्युक्तब्रह्मसिद्धिस्स्यात् यदि सिद्धाऽस्य विष्णुता ।
परोक्षमपरोक्षं वा प्रसादो मोक्ष एव वा ॥ ४५ ॥
ब्रह्मसिद्धिविशेषास्स्युः जिज्ञासायाः प्रभेदतः ।
अविच्छिन्ना च जिज्ञासा सुखशान्त्यैकसाधनम् ॥ ४६ ॥
जिज्ञासानयलब्धोऽयमर्थस्सर्वत्र साध्यते ।
२ जन्माधिकरणे विष्णोः कारणत्वं समर्थितम् ॥ ४७ ॥



३ कारणं शास्त्रवेद्यं स्यादिति सिद्धं तृतीयतः ।
श्रुतयः स्मृतयश्चैव शास्त्रमित्यपि दर्शितम् ॥ ४८ ॥
४ सर्वशास्त्रस्य मुख्यार्थो विष्णुरन्वयतो भवेत् ।
यतोऽयं निर्णयः सूत्रात् सूत्रं सर्वनियामकम् ॥ ४९ ॥
५ सर्वशब्दैर्हि वाच्योऽयमीक्षणीयत्वतो हरिः ।
नयपञ्चकसिद्धोऽयमर्थस्सर्वत्र साध्यते ॥ ५० ॥
६ ततोऽन्यत्र प्रसिद्धानां शब्दानां तु समन्वयः ।
आनन्दादिमयो विष्णुरभ्यस्तब्रह्मशब्दतः ॥ ५१ ॥
७ आधिदैवेन्द्रशब्दाद्यैर्वाच्यस्सोन्तस्थितत्वतः ।
८ भूतस्याकाशशब्दाद्यैः वाच्यो सावुत्तमत्वतः ॥ ५२ ॥
९ प्राणाद्याध्यात्मिकैश्शब्दैः वाच्यो लक्ष्मीपतित्वतः ।
१० ज्योतिश्शब्देन बोध्योऽयं कर्णादीनां विदूरतः ॥ ५३ ॥
११ स गानत्राणकर्तृत्वात् गायत्रीशब्दबोधितः ।
१२ प्राणादीन्द्रियशब्दैस्सः देवोपास्यत्वतोदितः ॥ ५४ ॥
इत्यन्यत्र प्रसिद्धानां शब्दानामन्वयः कृतः ।
नयार्थसंग्रहे ह्यत्र कृतं दिङ्मात्रसूचनम् ॥ ५५ ॥
सूत्रभाष्येऽथ टीकादौ द्रष्टव्यो विस्तरोऽस्य तु ।
महिम्नां साधनं येन तन्न्यायाध्ययनं विदुः ॥ ५६ ॥

इत्याद्ये प्रथमे पादे नयानामर्थसंग्रहः ।
कृतोऽयं राघवेन्द्रेण भूयाब्यासप्रसत्तये ॥

---

## अथ प्रथमाध्याये द्वितीयः पादः

अत्र पञ्च [illegible] अधिकरणानि ।

१. प्रथमं [illegible] अधिकरणम् [illegible]

[illegible] ( [illegible] ) [illegible] प्रसिद्धानां [illegible] अत्र विष्णो[illegible] [illegible] ।

१. ' [illegible] ' ( ऐ. आ. ३. ) इति यत् [illegible] [illegible] ' [illegible] आदित्यो [illegible] ' ( ऐ. आ. ३. ) इति [illegible], तत्रैव प्रकरणे 'चक्षुर्मय' इत्यादिना [illegible] [illegible] इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं सर्वत्र प्रसिद्धोपदेशात् ओं ॥ इति ।

' [illegible] ब्रह्म परमं [illegible] ' ( [illegible] ) ' [illegible] ब्रह्मेत्याचक्षते ' ( ऐ. आ. ३. ) इति ' [illegible] ' इति च [illegible] [illegible] ' [illegible] ' ( ऐ. आ. ३. ) [illegible] एव इति भावः । ' [illegible] स्थितः ' ( [illegible] ) [illegible] सर्वगतः । ' [illegible] ' ( [illegible] ) इति [illegible] [illegible] अन्या- [illegible] ॥ १ ॥

२. [illegible] सूत्रम् ।

॥ ओं [illegible] ओं ॥ इति ।



' स यो तो अश्रुत ' ( ऐ. आ. ३. ) इति अन्यत्रानुपपन्नाश्रुतत्वादिगुणश्रवणात् सर्वगतो विष्णुरेव । ' न ते विष्णो जायमानो न जातो ' ( ऋ. ७. ) इति अन्यस्य तद्गुणनिषेधात् इत्यर्थः ॥ २ ॥

३. आदित्यशब्दात् चक्षुर्मयत्वादेश्च जीवः सर्वगत इति आशङ्कां परिहरत् सूत्रम् ।

॥ ओं अनुपपत्तेस्तु न शारीरः ओं ॥ इति ।

सर्वशरीरगतदुःखादिप्राप्त्या जीवस्य सर्वशरीरस्थत्वानुपपत्तिः । अनादितः सर्वेषां सर्वशरीरस्थत्वे कर्मभेदस्य असंभवात् कर्मभेदेन भोगव्यवस्था यत् क्रियते तत् न युज्यते इति भावः ॥ ३ ॥

४. अत्रैव युक्त्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं कर्मकर्तृव्यपदेशाच्च ओं ॥ इति ।

अत्र ' आत्मानं परस्मै शंसति ' ( ऐ. आ. ३. ) इति सर्वगतस्य आत्मानम् इति कर्मत्वं, शंसतीति जीवस्य कर्तृत्वं प्रतीयते । एकस्यैव उभयाप्राप्तेः न जीवः सर्वगत इत्यर्थः ॥ ४ ॥

५. ब्रह्मशब्दस्य जीवेपि संभवात् तस्य अमुख्यत्वेऽपि चक्षुर्मयत्वादिबलेन ग्राह्यत्वात् ' श्रुत्वाप्येनं वेद न चैव कश्चित् ' ( भ. गी. ) इति तस्यापि अश्रुतत्वात् जीव एव सर्वगत इत्याशङ्कां निवर्तयत् सूत्रम् ।

॥ ओं शब्दविशेषात् ओं ॥ इति ।

ब्रह्मशब्दस्य ' एतमेव ब्रह्मेत्याचक्षते ' ( ऐ. आ. ३. ) इति

विशेषितत्वात् अनेन ब्रह्मशब्देन न जीव उच्यते । 'ब्रह्मैष: ........ एष उ एव हरि:' (इन्द्र. शा.) इति सावधारणब्रह्मशब्द: विष्णावेव इत्यर्थ: ॥ ५ ॥

६. अत्रैव स्मृतिमुदाहरत् सूत्रम् ।

॥ ओं स्मृतेश्च ओं ॥ इति ।

'अहमात्मा ........ सर्वभूताशयस्थित:' (भ. गी.) इति कृष्णवचनात् । अभेदादिकल्पनमप्रामाणिकत्वादयुक्तं इति भाव: ॥

७. अल्पौकस्त्वात् चक्षुर्मयत्वादिना च सर्वगतो जीव इत्याशङ्का परिहरत् सूत्रम् ।

॥ ओं अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ओं ॥ इति ।

अल्पौकस्त्वोपदेशात् अत्रोक्तो न विष्णुरिति चेन्न । हरे: तथाप्युपास्यत्वात् । सर्वगतस्य अल्पौकस्त्वं व्योमवद्युक्तत्वात । 'सर्वेन्द्रियमयो ........ सर्वनामाभिधेय:' (स्कान्द) इति तस्य चक्षुर्मयत्वस्य आदित्यादिनामवत्वस्य च संभवात् हरिरेव सर्वगत इत्युक्तम् इति भाव: ॥ ७ ॥

८. एकदेहस्थितजीवेश्वरयो: समानो भोग इति न विष्णु: सर्वगत इत्याशङ्का निवारयत् सूत्रम् ।

॥ ओं संभोगप्राप्तिरिति चेन्न वैशेष्यात् ओं ॥ इति ।

'सर्वज्ञताल्पज्ञताभेदात् सर्वशक्त्यल्पशक्तित: । स्वातन्त्र्यपारतन्त्र्याभ्यां संभोगो नेशजीवयो:' इति गारुडवचनात् ईश्वरस्य सर्वज्ञत्वात् सामर्थ्यविशेषात् तत्पक्षे दोषाभावात् । अतो विष्णुरेव सर्वगत इति प्रागुक्तानन्दमय: प्राण: स एव इति स्थापितमिति भाव: ॥८॥ अ०॥१॥



अत्र विष्णौ आदित्यश्रुतिसहपठितसर्वगतत्वमहिमा उक्त: । तथा वेदस्य सर्वत्र तन्महिमोपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य पुरुषार्थहेतुत्वमर्थात् सिद्धं वेदमहत्त्वम् ॥

## २. द्वितीयं अत्तृत्वाधिकरणम् । सूत्रद्वयात्मकम् ।

१. जन्माद्यस्येति विष्णो: यत्संहारकर्तृत्वमुक्तं तत् 'सर्वं वा अत्ति तददितेः अदितित्वम्' (बृ. ३.) इति अदिते: श्रूयते इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं अत्ता चराचरग्रहणात् ओं ॥ इति ।

'स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु' (स्कान्दे) 'यमप्येति भुवनं साम्पराये' (घृत. ऋ.) इति चराचरात्तृत्वश्रवणात् विष्णुरेव सर्वात्ता अदितिश्च इति अर्थ: ॥ ९ ॥

२. प्रकरणस्यास्य वैष्णवत्वोपपादकं सूत्रम् ।

॥ ओं प्रकरणाच्च ओं ॥ इति ।

'नेहासीत् किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा ........ सो असृजद्विश्वं अद्यार्थं हरये.' (ब्र. वै.) इति अस्य वैष्णवप्रकरणत्वं कथितम् । अतो सर्वात्ता विष्णुरेवेति सिद्धम् ॥ १० ॥ अ० ॥ २ ॥

अत्र विष्णोरदितिशब्देन सद्यात्तृत्वमहिमा उक्तः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

### ३. तृतीयं गुहाधिकरणम् । सूत्रद्वयात्मकम् ।

१. सर्वात्तृत्वं हरेरुक्तम् अयुक्तम् । 'सुकृतं पिबन्तौ' (ऋ. १०) इति द्विवचनश्रुतेः सर्वात्तृत्वमध्यपतितं कर्मफलभोक्तृत्वं तस्य एकस्य हरेः न सम्भवतीति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ओं ॥ इति ।

गुहाप्रविष्टत्वलिङ्गात् तौ विष्णुरूपे एवेत्युक्तम् । 'घर्मौ समन्तौ' इति तत्रैव द्विरूपतया हरेः शरीरे स्थितिरुक्ता । 'अधिष्ठाय मनश्चायं विषयानुपसेवते' इति गीतावचनं इदमेव साधयति । 'शुभं पिबत्यसा नित्यं नाशुभं पिबते हरिः । पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित्' (पा.) इति अचिन्त्यैश्वर्यबलेन सुखभोगोपपत्तिश्च सिध्यति । 'अनश्नन् अन्य' इति अशुभभोगाभावः श्रूयते । गुहाप्रविष्टत्वस्य जीवे संभवेऽपि श्रुत्यादिप्रसिद्धमेव ग्राह्यम् । 'यो वेद' (तै.) इति विष्णोरेव गुहाप्रविष्टत्वं मुख्यमिति भावः ॥११॥

२. अत्र निरवकाशश्रुत्या एतमेवार्थं प्रतिपादयत् सूत्रम् ।

॥ ओं विशेषणाच्च ओं ॥ इति ।

एक एव कर्मफलभोक्ता विष्णुः । ब्रह्मशब्दविशेषणात् । ब्रह्म-



शब्दश्च विष्णावेव । स च सर्वगुणवाची । सः विष्णोरेव वाचकः । तं विना अन्येषां तदभावात् । जीवपरत्ववादः समन्वयाध्यायेऽत्र असंगतः । 'सत्य आत्मा सत्यो जीवः सत्यं भिदा' (पैं. श्रु.) इति जीवेश्वरा-भेदनिरासकश्रुतिबाधात् इति भावः ॥ १२ ॥ अ० ॥ ३ ॥

अत्र हरेः शुभफलभोक्तृत्वरूपमहिमा उच्यते । तथा वेद-व्याख्यानं तथैव वेदोत्पन्नज्ञानस्य पुरुषार्थसाधनत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

### ४. चतुर्थम् अन्तराधिकरणम् । सूत्रपञ्चकम् ।

'यश्चासावादित्ये' (तै.) इति आनन्दमयस्य आदित्यस्थत्वम् उक्तम् । तच्च अर्थात् अक्षिस्थत्वमेव । तदेव छान्दोग्ये 'य एषोऽन्त-रक्षिणि पुरुषः ...... तदमृतमभयमेतद्ब्रह्म' इति कस्यचित् प्रतीयते । ततश्च आनन्दमयोऽपि स एव इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं अन्तर उपपत्तेः ओं ॥ इति ।

चक्षुरन्तस्थो विष्णुरेव । तस्यैव 'त्रिपादस्यामृतं दिवि' (पु.) इत्युक्तामृतत्वाद्युपपत्तेः । ब्रह्मशब्दाद्युपपत्तेश्च । तत्रैव छान्दोग्ये 'सोऽहमस्मि' इति यत् श्रूयते तत् अन्तर्याम्यपेक्षयैव । 'अन्तर्यामिणमीशेशमपेक्ष्याऽहं त्वमित्यपि । सर्वे शब्दाः प्रयुज्यन्ते सति भेदेपि वस्तुषु' इति महाकौर्मोक्तेः इति भावः ॥ १३ ॥

२. तत्रैव युक्त्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं स्थानादिव्यपदेशाच्च ओं ॥ इति ।

'तद्यदस्मिन् सर्पिर्वा उदकं वा सिञ्चति वर्त्मनि एव गच्छति' (छां. ४.) इत्यादिना स्थानशक्तिरुच्यते । 'एष उ एव वामनिः एष हि सर्वाणि वामानि नयति । एष उ एव भामनिः एष हि सर्वेषु लोकेषु भाति' (छां. ४.) इति स्वरूपशक्तिश्चोच्यते । एतदुभयशक्तिबलात् चक्षुरन्तस्थो विष्णुरेव । यत्स्थानत्वादिदं चक्षुः असङ्गं सर्ववस्तुभिः' इति वामनवचनं चक्षुषः असङ्गत्वे हेतुः इत्यर्थः ॥ १४ ॥

३. अत्रैव प्रकरणबलमुपपादयत् सूत्रम् ।

॥ ओं सुखविशिष्टाभिधानादेव च ओं ॥ इति ।

अत्र छान्दोग्यश्रुतौ 'प्राणो ब्रह्म' इति मुख्यप्राणस्य अखिलजीवेभ्यः पूर्णत्वमुक्तम् । तथा 'कं ब्रह्म खं ब्रह्म' इति सुखसंविदोः पूर्णत्वमुच्यते । अत एवास्य प्रकरणस्य सुखविशिष्टाभिधानादेव वैष्णवत्वं सिध्यति । पूर्णानन्दसंविस्त्वस्य ब्रह्मलक्षणत्वात् । तत् अन्येषाम् आपेक्षिकम् । आपेक्षिकं पूर्णत्वम् अमुख्यम् । ब्रह्मणि तु निरवधिकं पूर्णत्वम् । अत एव तत् तत्र मुख्यम् । श्रुतिलिङ्गादिबाधकसद्भावात् न तदब्रह्मणि युज्यते इति भावः ॥ १५ ॥

४. अस्य प्रकरणस्य वैष्णवत्वं न युक्तम् । 'प्राणो ब्रह्म कम्' इति विद्याम् उक्त्वा 'य एष आदित्ये पुरुषः' इत्यादि विद्यां चोक्त्वा अग्निभिः 'उपकोसल ! एषा सोम्य ते अस्मद्विद्या आत्मविद्या च' इत्युक्तत्वात् द्वितीयविद्यायाः अग्निविषयत्वस्यैव युक्तत्वात् । अतो चक्षुरन्तस्थविद्या अग्निविषया इत्याशङ्कां परिहरत् सूत्रम् ।



॥ ओं श्रुतोपनिषत्कगत्यभिधानाच्च ओं ॥ इति ।

अस्यापि वैष्णवत्वमेव । 'अथ यदु चैवास्मिन् शव्यं कर्म कुर्वन्ति यदु चैनार्चिषमेवाभिसंविशति ........ तत्पुरुषो मानवः स एनान् ब्रह्म गमयति' (छां. ४.) इति श्रुतैतद्विद्यानां ब्रह्मगत्यभिधानात् । श्रुतमिति मननिदिध्यासनोपलक्षकम् । कं ब्रह्मेति प्रकृतत्वात् कगतिः ब्रह्मगतिः । फलश्रुतौ 'य एवं वेद' इत्यत्र ब्रह्मगतेः विद्याप्राप्यत्वमुच्यते । अथ यदीयमग्निविद्या तर्हि अग्निगतिरेव फलं स्यात् । 'देवान् देवयजो यान्ति' (भ. गी.) इत्यादेः । अतोऽत्र ब्रह्मप्राप्तिफलकेयं विद्या ब्रह्मपरैव । 'अस्मद्विद्या' इति अन्तर्यामिविवक्षया उक्तम् । 'आत्मविद्या' इति तस्याः सर्वगतात्मविद्यात्वमभिधीयते । आत्मन एव ब्रह्मत्वात् इति भावः ॥१६॥

५. विपक्षे बाधकं दर्शयत् सूत्रम् ।

॥ ओं अनवस्थितेरसम्भवाच्च नेतरः ओं ॥ इति ।

चक्षुरन्तस्थो नाग्निः । स च न जीवान्तरनियामकः तस्यापि जीवत्वात् । तस्य नियामकान्तरभावे एवं तस्यापीति अनवस्था । प्रेरणासंभवाच्च । अग्नेः स्वातन्त्र्ये जीवान्तरस्य तत् स्यात् । ईश्वराङ्गीकारपक्ष एव एकस्य अन्यनियामकत्वं युज्यते । ईश्वरस्य सर्वनियामकत्वात् । अतो अक्ष्यादित्यस्थः विष्णुरेव दिव्यदृष्टिगोचरो आनन्दमयः तज्ज्ञानादेव मोक्षः इति सिद्धम् इति भावः ॥ १७ ॥ अ० ॥ ४ ॥

अत्र विष्णोः सर्वस्य सर्वस्य नियामकत्वमहामहिमा उक्तः ।

तथा वेदस्य व्याख्यानं तथैव वेदोत्पन्नस्य ज्ञानस्य पुरुषार्थहेतुत्वमर्थात् सिद्धं वेदमहत्त्वम् ।

### ५. पञ्चमम् अन्तर्याम्यधिकरणम् । सूत्रत्रयात्मकम् ।

१. अक्षिस्थपुरुषस्य अमृतत्वं यदुक्तं तत् काण्वमाध्यन्दिनश्रुत्योः कस्यचित् अन्तर्यामिणः श्रूयते 'एष त आत्मान्तर्याम्यमृतः' (बृ. ५.) इति । तस्य पृथिव्यादिशरीरत्वश्रवणात् शरीरशब्दस्य स्वरूपे प्रयोगात् प्रकृतेश्च पृथिव्याद्यात्मकत्वात् सोऽन्तर्यामी प्रकृतिः स्यात् । पृथिव्यादिजीवस्य वा पृथिव्याद्यात्मकत्वं स्यात् । चिच्छरीरस्य विष्णोः न कथमपि तत् संभवति इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ओं ॥ इति ।

अन्तर्यामिणः पृथिव्याद्यधिदैवाविदितत्वतदन्तरत्वाख्यविष्णुधर्मव्यपदेशात् अन्तर्यामी विष्णुरेव । 'यं पृथिवी न वेद पृथिव्या अन्तरः' इति श्रुतेः । विष्णुरेव हि 'न ते विष्णो जायमानो न जातः' (ऋ. ७.) स योऽज्ञोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः सर्वेषां भूतानां 'अन्तरपुरुष' (ऐ. आ. ३.) इत्यादिना अविदितः अन्तरश्च ॥ १८ ॥

२. प्रकृतेरन्तर्यामित्वं निराकुर्वत् सूत्रम् ।

॥ ओं न च स्मार्तमतद्धर्माभिलापात् ओं ॥ इति ।



त्रिगुणत्वादिप्रकृतिधर्मानभिलापात् कापिलस्मृतिसिद्धं प्रधानं नान्तर्यामि । किंतु विष्णुरेव इति भावः ॥ १९ ॥

३. जीवस्य अनन्तर्यामित्वे विशेषयुक्तिं प्रतिपादयत् सूत्रम् ।

॥ ओं शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ओं ॥ इति ।

'आत्मनोन्तरः' (बृ. माध्यं.) 'विज्ञानादन्तरः' (बृ. ५.) इति एनं जीवम् अन्तर्यामिणः सकाशात् भेदेनाधीयते । अतो न शारीरः जीवः अन्तर्यामी । 'शीर्यते नित्यमेवास्मान् विष्णोस्तु जगदीदृशम् । रमते च परोह्यस्मिन् शरीरं तस्य तज्जगत्' इति परमात्मन योगवृत्त्या पृथिव्यादीनां शरीरत्वोपपत्तेः विष्णुरन्तर्यामी अमृतः आनन्दमयश्च इत्यर्थः ॥ २० ॥ अ० ॥ ५ ॥

अत्र सर्वसत्ताप्रदत्वेन सर्वान्तर्यामित्वाविदितत्वादिमहिमा विष्णोरुक्तः । तथा वेदस्योपपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

### ६. षष्ठं अदृश्यत्वाधिकरणम् । सूत्रत्रयात्मकम् ।

१. 'अदृश्येऽनात्म्ये' (तै.) इति आनन्दमयस्य अदृश्यत्वादिकम् उक्तम् । तच्च आथर्वणे अक्षरस्योक्तम् । 'अथ परा यया तदक्षरमधिगम्यते' 'यत्तदद्रेश्यमग्राह्यम्' (मुं. १.) इत्यादिना । तच्च अदृश्यत्वादिकं जडप्रकृत्यादीनां भवेत् । पृथिव्यादिदृष्टान्तेन उपादानतया जगत्कारणत्वाद्युक्तेः । अत्र पठितो ब्रह्मशब्दः न विष्णु-

परः । विष्णोः परतः परत्वाभिधानात् इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं अदृश्यत्वादिगुणको धर्मोक्तेः ओं ॥ इति।

विष्णुरेव अदृश्यत्वादिगुणकः । अदृश्यत्वादिगुणकस्य 'अथ परा' (मुं.) इति परविद्याविषयत्वोक्तेः । 'तमेवं विद्वान्' इति विष्णोः मोक्षसाधनविषयत्वोक्त्या परविद्याविषयत्वमेवोक्तं भवति । 'ऋगाद्या अपरा विद्याः यदा विष्णोर्न वाचकाः । ता एव परमा विद्याः यदा विष्णोस्तु वाचकाः' इत्युक्तेः ॥ २१ ॥

२. तत्रैव विशेषहेतुं प्रतिपादयत् सूत्रम् ।

॥ ओं विशेषणभेदव्यपदेशाभ्यां च नेतरौ ओं ॥ इति ।

अदृश्यत्वादिगुणकस्य सार्वज्ञविशेषणात् न जडप्रकृतिः । विरिञ्चस्य विष्णुजन्यत्वात् ततो भेदव्यपदेशात् न विरिञ्चः । अक्षरस्य अन्यमीशमिति भेदव्यपदेशात् न रुद्रः अदृश्यत्वादिगुणकः । अतो ब्रह्माक्षरेशशब्दाः विष्णावेव मुख्याः ॥ २२ ॥

३. विष्णोः अदृश्यादित्वे युक्त्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं रूपोपन्यासाच्च ओं ॥ इति।

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशम्' (मुं ३.) इति अदृश्यत्वादिगुणकस्य रुक्मरूपोपन्यासात् विष्णुरेवासौ । 'एको नारायण आसीत्' इत्यारभ्य 'नारायणस्य चत्वारि रूपाणि । शुक्लं, रक्तं, रौक्मं, कृष्णमिति' इत्युक्तत्वात् एतादृगेतद्रूपमिति तस्यैव हि



रूपाणि । अतो अदृश्यत्वादिगुणको आनन्दमयो विष्णुरेवेति सिद्धम् इति भावः ॥ २३ ॥ अ० ॥ ६ ॥

अत्र अक्षरशब्दसहितादृश्यत्वादिगुणकत्वं विष्णोर्महिमा उक्तः । तथा वेदस्योपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य पुरुषार्थहेतुत्वमर्थात् सिद्धं वेदमहत्वम् ॥

## ७. सप्तमं वैश्वानराधिकरणम् । सूत्रनवकम् ।

१. पूर्वोक्तादृश्यत्वादिगुणेषु सर्वगतत्वमुक्तम् । तच्च छन्दोगश्रुतौ 'अभिविमानमात्मानं वैश्वानरमुपास्ते' इति अभिविमानपदेन वैश्वानरस्योक्तम् । लोकप्रसिद्धितः वैदिकविद्याव्यवहारभेदतश्च वैश्वानरशब्दो विष्ण्वन्यविषय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं वैश्वानरः साधारणशब्दविशेषात् ओं ॥ इति।

'अभिविमानमात्मानम्' (छां. ५.) इति आत्मनि विशेषणात् अयं वैश्वानरः विष्णुरेव ॥ २४ ॥

२. अमुख्यया वृत्त्या आत्मशब्दः अन्यपरः इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं स्मर्यमाणमनुमानं स्यादिति ओं ॥ इति ।

'अहं वैश्वानरो भूत्वा' इति स्मर्यमाणं गीतावाक्यं प्रकृतेऽपि वैश्वानरशब्दस्य विष्णुनिष्ठत्वसाधकं भवति । अनेन समाख्यानयुक्तिः अत्रोक्ता भवति ॥ २५ ॥

३. वैश्वानरस्य अग्नित्वनिश्चायकोपि वर्तते इत्याशङ्का परिहरत् सूत्रम् ।

॥ ओं शब्दादिभ्योन्तःप्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसंभवात् पुरुषविधमपि चैनमधीयते ओं ॥ इति ।

वैश्वानरस्य अग्नित्वसाधकाः हेतवः सन्ति । 'अयमग्निः' इति बृहदारण्यके अग्निलिङ्गं 'वैश्वानरे हुतम्' (छां. ५.) इति होमाधिकरणत्वं 'अयमग्निर्वैश्वानरः ....अन्तःपुरुषे' (बृ.) इति अन्तःप्रतिष्ठानं च इति चेन्न । उभयत्र श्रुत्यादिसाम्येपि अग्नित्वसाधकाः विष्णौ सावकाशाः विष्णुत्वसाधकाः अग्नौ निरवकाशाः इति वैश्वानरस्य विष्णुत्वनिश्चयः भवति । 'परतः परं....हरिमुपासीत' इति सर्वनामा सर्वकर्मा सर्वलिङ्गः (म. ३.) इति तत्तन्नामलिङ्गादिना तस्यैव दृष्ट्युपदेशात् । विष्णुप्रकरणत्वाच्च 'को न आत्मा किं ब्रह्म' इति च आरम्भात् गुणपूर्णत्वार्थकात्मशब्दवाच्यत्वस्यान्येषामसंभवात् वैश्वानरो विष्णुरेवेति सिद्ध्यति। श्रुतिसमाख्या च 'चन्द्रमा मनसो जात' इति । इदं च पुरुषसूक्तगतं वाक्यम् । अत्र पुरुषाख्यो विष्णुरभिहितः । तमेवात्र 'मूर्धैव सुतेजाश्चक्षुर्विश्वरूप' इति वैश्वानरमधीयते । समाख्यानरूपपुरुषसूक्तस्य च विष्णुपरत्वं प्रसिद्धमेव । 'सहस्रशीर्षा पुरुषः ... हरिः' (च. शि.) इत्यादेः । अतः अत्रोक्तो वैश्वानरः विष्णुरेव इति भावः ॥ २६ ॥

४. वैश्वानरशब्देन देवताभूतौ किं न स्यात् इत्याशङ्कां परिहरत् सूत्रम् ।



॥ ओं अत एव न देवताभूतं च ओं ॥ इति ।

आत्मशब्दादिहेतूनां निरवकाशत्वात् वैश्वानरशब्दो न देवताभूतयोः किन्तु विष्णावेव ॥ २७ ॥

५. तर्हि प्रसिद्धेः का गतिरित्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं साक्षादप्यविरोधं जैमिनिः ओं ॥ इति ।

अग्न्यादिशब्दाः ब्रह्मवाचकाः । तथापि हानोपादानादिव्यवहारसिद्ध्यर्थम् अग्न्यादौ व्यवहरन्ति ज्ञानिनः । तदन्ये तु ज्ञानाभावादेव व्यवहरन्ति इति न विरोध इति जैमिनिः मन्यते । जैमिन्यादयः व्यासमतैकदेशाश्रिता इति न तद्वादविरोधः व्यासमतस्य ॥ २८ ॥

६. वैदिकप्रसिद्धेः अनादित्वात् अग्न्यादीनामग्न्यादिपरत्वं वाच्यम् इति आशङ्कां परिहरत् सूत्रम् ।

॥ ओं अभिव्यक्तेरित्याश्मरथ्यः ओं ॥ इति ।

अग्न्यादिसूक्तादिभिः ब्रह्मोपास्तौ अग्न्यादिष्वेव स्वेच्छया ब्रह्मणो अभिव्यक्तिः इति तथा प्रसिद्धिरिति आश्मरथ्यो मन्यते ॥२९॥

७. अत्रैव प्रकारान्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं अनुस्मृतेर्बादरिः ओं ॥ इति ।

अग्न्यादिविद्याप्रतिपाद्यः विष्णुरेव । तथापि तत्तत्सूक्ताद्युपासकैः अग्न्यादिष्वेव विष्णुः प्रतिपत्तव्यः इति अग्न्यादीनां वाच्यत्वं बादरिः मन्यते ॥ ३० ॥

८. अत्रैव रीत्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं संपत्तेरिति जैमिनिः तथा हि दर्शयति ओं ॥ इति ।

अग्न्यादयः परब्रह्मवाचकाः । तथापि सूक्तादिभिः अग्न्यादौ भगवदुपास्तौ अग्न्यादिप्राप्तिः भवति । अतः तदन्यथानुपपत्त्या अन्येषां वाच्यत्वं न मन्तव्यं इति जैमिनिः मन्यते । अत्र पुनः शब्दाः साक्षाद्ब्रह्मवाचकाः तथापि सूक्तादिव्यवहारस्य अग्न्यादिप्राप्त्या अन्यथोपपत्तिः इति जैमिनिः वर्णयति । अग्न्यादौ ब्रह्मोपास्तौ अग्न्यादिप्राप्तिसाधकश्रुतिमुदाहरति । 'तं यथा यथा उपासते तदेव भवति' इति । भवतीत्यस्य प्राप्नुवन्ति इत्यर्थः ॥ ३१ ॥

९. अन्योपासकस्य अन्यप्राप्तेरयोग इत्यतः

॥ ओं आमनन्ति चैनमस्मिन् ओं ॥ इति ।

विष्णूपासकः अग्न्यादीन् प्राप्नोति इत्यनेन अग्न्याद्यन्तर्गतभगवत् प्राप्तेर्विवक्षितत्वात् । 'योऽग्नौ तिष्ठन्' (बृ. ५.) इत्यादिना अग्न्यादौ विष्णुमामनन्ति श्रुतयः । अतोऽयं वैश्वानरः विष्णुरेव । स एव सर्वगतो आनन्दमयः इति सिद्धम् इति भावः । अत्र वैश्वानरनामवत्वं पाचकत्वाद्यनेकलिङ्गसमन्वयसिद्ध्यर्थं विष्णोरुक्तम् ॥३२॥ अ० ॥७॥

अत्र पाचकत्वाद्यनेकमहिमानः विष्णोरुक्ताः । तथा वेदस्य महिम्नां प्रतिपादकत्वं तथैव वेदोत्पन्नस्य ज्ञानस्य पुरुषार्थहेतुत्वम् । अर्थात् सिद्धम् ॥

प्रथमस्य द्वितीयेऽस्मिन् सूत्राणामर्थसंग्रहः ।
कृतश्च राघवेन्द्रेण व्याससेवा भवेदसौ ॥

---



# ब्रह्मसूत्राधिकरणार्थसंग्रहः

## प्रथमाध्याये द्वितीयः पादः

आद्यद्वितीये सम्प्रोक्ताः शब्दा लिङ्गात्मका हरौ ।
शब्दो नामात्मकः प्रोक्तः यद्ययं धर्मिवाचकः ॥१॥
लिङ्गात्मकस्स विज्ञेयः सधर्मे धर्मिणि स्थितः ।
१ विष्णावेव प्रसिद्धस्य ब्रह्मशब्दस्य भावतः ॥२॥
सर्वत्रेत्युच्यमानोऽसौ विष्णुरेव न चापरः ।
२ चराचराणां संहर्ता सर्वात्ता विष्णुरेव हि ॥३॥
३ शुभं पिबत्यचिन्त्योऽयं शरीरे कर्मणां फलम् ।
४ अमृतत्वादिलिङ्गेभ्यो चक्षुरन्तस्थ एव च ॥४॥
५ अज्ञातत्वादन्तरत्वात् अन्तर्यामी सुखानुभूः ।
६ अदृश्यत्वादिगुणको परविद्यैकबोधितः ॥५॥
७ वैश्वानरो विष्णुरेव ह्यात्मशब्दोदितत्वतः ।
सूत्रसिद्धस्य यत्किंचिज्जैमिन्याद्या वदन्ति हि ॥६॥
अतो व्यासमतं सर्वं विरुद्धं नैव कस्यचित् ।
समग्रात्तु यतश्श्रेयः ग्राह्यं व्यासोक्तमञ्जसा ॥ ७ ॥

प्रथमस्य द्वितीयेऽस्मिन् नयानामर्थसंग्रहः ।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ॥

श्रीवेदव्यासाय नमः । श्रीगुरुभ्यो नमः । हरिः ॐ ।

## अथ प्रथमाध्याये तृतीयः पादः

अत्र पादे त्रिचत्वारिंशत् सूत्राणि । चतुर्दश अधिकरणानि ।

अस्मिन् पादे सूत्रकृत् प्रायेण हरौ तदितरत्र च श्रुत्यादिप्रसिद्धानां लिङ्गात्मकानां शब्दानां विष्ण्वेकनिष्ठत्वं प्रबलहेतुभिः दर्शयति । प्रायेणेति देवताधिकरणव्यावृत्तिः ।

### १. प्रथमं द्युभ्वाद्यधिकरणम् । सूत्रसप्तकम् ।

१. अदृश्यत्वादिगुणकस्य विष्णोः परविद्याविषयत्वमुक्तम् । तत् आथर्वणे 'यस्मिन् द्यौः' इत्युक्तस्य द्युभ्वाद्यायतनस्य श्रूयते 'अमृतस्यैष सेतुः' इति । द्युभ्वाद्यायतनत्वं 'रुद्रो वाव लोकाधारः' इति रुद्रस्योक्तम् । तथा वायोः जीवस्य प्रकृतेश्च तत् प्रतीयते । परविद्याविषयत्वमपि तेषामेव इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं द्युभ्वाद्यायतनं स्वशब्दात् ओं ॥ इति ।

द्युभ्वाद्यायतने स्वशब्दापरपर्यायात्मशब्दः श्रूयते इति तत् विष्णुरेवेति युक्तम् । 'आत्मशब्दादयः शब्दाः तमृते विष्णुमव्ययम् । न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णता' इति ब्रह्मवैवर्तवचनात् ॥१॥

२. आत्मशब्दस्य अमुख्यार्थत्वं न कल्पनीयमिति प्रतिपादयत् सूत्रम् ।

॥ ओं मुक्तोपसृप्यव्यपदेशात् ओं ॥ इति ।

'अमृतस्यैष सेतुः' 'मुक्तानां परमा गतिः' इति मुक्ताश्रयत्वमुक्तप्राप्यत्वश्रवणात् आत्मशब्दस्य अमुख्यार्थत्वं न कल्पनीयम् ॥२॥



३. द्युभ्वाद्यायतनत्वं रुद्रप्रकृत्योः किं न स्यात् इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं नानुमानमतच्छब्दात् ओं ॥ इति ।

अनुमानात्मकागमपरिकल्पितः लोकप्रसिद्धो रुद्रः । भस्मधरोग्रत्वादयः तच्छब्दाः । ते द्युभ्वाद्यायतने न दृश्यन्ते । 'सोंतकः स रुद्रः.........स ईशो यो हरिः योऽनन्तो यो विष्णुः' इत्यादि श्रुतिबलेन रुद्रादिश्रुतेः अन्तकत्वादिलिङ्गस्य च 'रुजं द्रावयते यस्मात् रुद्रस्तस्माज्जनार्दनः' इत्यादिमहायोगविद्वद्रूढ्या विष्ण्वेकपरत्वात् । तस्माद्विष्णुरेव द्युभ्वायतनम् ॥ ३ ॥

४. न वायुजीवावपि द्युभ्वाद्यायतनं इति प्रतिपादयत्सूत्रम् ।

॥ ओं प्राणभृच्च ओं ॥ इति ।

आत्मशब्दः मुक्तप्राप्यत्वातत्तच्छब्दत्वादिविष्णुपरत्वसाधकम् । 'अजायमानो बहुधा विजायते' इति जीवपरत्वसाधकहेतुश्च विष्णुनिष्ठः । अजायमानस्य तस्यैव बहुधा जन्मोक्तेः ॥ ४ ॥

५. जीवेशाभेदः किं न स्यात् इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं भेदव्यपदेशात् ओं ॥ इति ।

अत्रैव 'अन्यमीशम्' इति द्युभ्वाद्यायतनस्य जीवात् भेदस्य व्यपदेशात् न जीवेशाभेद इति भावः ॥ ५ ॥

६. अन्यमीशमित्यत्र ईशशब्दस्य अर्थान्तरत्वशङ्कां परिहरत् सूत्रम् ।

॥ ओं प्रकरणात् ओं ॥ इति।

'द्वे विद्ये वेदितव्ये' इत्यारभ्य अधीतत्वेन इदं वैष्णवं प्रकरणम्। तेन ईशशब्दस्य विष्णुनिष्ठत्वं समर्थ्यत इत्यर्थः ॥ ६ ॥

७. अत्रैव हेत्वन्तरं प्रतिपादयत् सूत्रम्।

॥ ओं स्थित्यदनाभ्यां च ओं ॥ इति।

'द्वा सुपर्णा' इत्यत्रैव क्रमेण कर्मफलादनं तद्विना स्थितिश्च जीवेश्वरयोः श्रूयमाणं तयोः भेदमेव प्रकटयति। न चायं भेदः मिथ्या। जीवेशप्रमापकप्रमाणसिद्धत्वात्। अतः द्युभ्वाद्यायतनं परविद्याविषयश्च विष्णुरेव ॥ ७ ॥ अ० ॥ १ ॥

अत्र परविद्याविषयस्य विष्णोः द्युभ्वाद्यायतनत्वरूपमहिमा उच्यते। तथा वेदस्य प्रतिपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वमर्थात् सिद्धं वेदमहत्वम् ॥

## २. द्वितीयं भूमाधिकरणम्। सूत्रद्वयात्मकम्।

१. आनन्दमयाधिकरणे पूर्णानन्दत्वं विष्णोरुक्तम्। तत् छांदोग्ये भूम्नः प्रतीयते। 'यो वै भूमा तत् सुखम्' इति। स भूमा विष्णोरन्यः। प्राणो वा आशायाः भूयान् इति प्राणस्य सर्वोत्तमत्वम् उक्त्वा भूम्नः आम्नातत्वात्। अयं तु प्राणशब्दः वायुवाचक एव। अत्र प्राणस्य 'उत्क्रान्तप्राणान्' इति उत्क्रमणाद्युक्तत्वात्। तस्य विष्णावसंभवात् इति प्राप्ते सिद्धान्तयत् सूत्रम्।



॥ ओं भूमासंप्रसादादध्युपदेशात् ओं ॥ इति।

'यो वै भूमा तत्सुखम्' इति पूर्णसुखरूपत्वात् नामादीनां सर्वेषामुपरि आदेशाच्च भूमा विष्णुः। 'विश्वशंभुवम्', 'विश्वतः परमा' इत्यादि श्रुतेः विष्णोरेव पूर्णं सुखं सर्वोत्तमत्वं च। प्रकृतेऽपि वाक्ये 'एष तु वा अतिवदति' इत्यादिना प्रश्नाद्यध्याहारं कृत्वा विष्णोः भूयस्त्वमुक्त्वा भूम्नः उक्तेः। अन्तर्यामिविवक्षया प्राणपदेन विष्णोरुक्तिः। 'आत्मन आकाशः सम्भूतः' इतिवत् इति भावः ॥८॥

२. विष्णोः भूमत्वे युक्त्यन्तरं प्रतिपादयत् सूत्रम्।

॥ ओं धर्मोपपत्तेश्च ओं ॥ इति।

'स एवाधस्तात् स उपरिष्टात्...यत्र नान्यत् पश्यति ... स भूमा स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नि' इति भूम्नि सर्वगतत्वादि श्रुतमिति भूमा विष्णुरेव। ततः स एव आनन्दमयोऽपि इति सिद्धमिति भावः ॥ ९ ॥ अ० ॥ २ ॥

अत्र विष्णोः भूमत्वमहिमा उच्यते। तथा वेदस्योपपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ३. तृतीयम् अक्षराधिकरणम्। सूत्रत्रयात्मकम्।

१. विष्णौ उक्ताः अदृश्यत्वादिगुणाः वाजसनेयके अक्षरे श्रुताः। तदक्षरं श्रीतत्त्वम्। 'एतस्य वा अक्षरस्य प्रशासने गार्गि

सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति चन्द्रसूर्याधारत्वोक्तेः। तस्य चन्द्राधारत्वस्य 'अहं सोममाहनसं बिभर्मि' (ऋ. १०.) इति श्रीतत्त्वधर्मत्वात् इति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ओं अक्षरमम्बरान्तधृतेः ओं ॥ इति।

ब्रह्मैवेदमक्षरम्। 'आकाश एव तदोतं च प्रोतं च' इति आकाशशब्दितप्रकृतेः सर्वाधारत्वमुक्त्वा 'एतस्मिन्नक्षरे गार्गि आकाश ओतश्च प्रोतश्च' इति अक्षरस्य तदाधारत्वं श्रूयते। 'य उ त्रिधातु पृथिवीं उत द्याम् एको दाधार भुवनानि विश्वा' (ऋ. १.) इत्यादेः 'विष्णुरेको बिभर्तीदम्' इति स्कान्दवचनाच्च विष्णुरेव सर्वाधारः अदृश्यत्वादिगुणकः आनन्दमयश्च इति सिद्धम् ॥ १० ॥

२. तत्रैव हेत्वन्तरं प्रतिपादयत् सूत्रम्।

॥ ओं सा च प्रशासनात् ओं ॥ इति।

सा च धृतिः प्रशासनाद्युज्यते। 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ. ६.) इति श्रुतेः। आज्ञामात्रेण सर्वाधारत्वलिङ्गात् अक्षरं विष्णुरेव। सर्वधृतिहेतु-प्रशासनं तस्यैव। 'चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत्' इत्यादि श्रुतेः। 'एकः शास्ता न द्वितीयोऽस्ति शास्ता' इत्यादेश्च ॥ ११ ॥

३. तत्रैव हेत्वन्तरं प्रतिपादयत् सूत्रम्।

॥ ओं अन्यभावव्यावृत्तेश्च ओं ॥ इति।



'एतद्वै तदक्षरं गार्गि ब्राह्मणाभिवदन्ति अस्थूलमनणुः' (बृ. ५.) इति सर्ववस्तुस्वभावभूतस्थूलत्वादीनां अक्षरे व्यावृत्तिकथनाच्च अक्षरं ब्रह्म इति सिद्धम् ॥ १२ ॥ अ० ॥३॥

अत्र आज्ञामात्रेण सर्वाधारत्वं विष्णोर्महिमा उक्तः। तथा वेदस्य उपपादनं तथैव वेदोत्पन्नज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ४. चतुर्थम् ईक्षतिकर्माधिकरणम्। एकं सूत्रम्।

'जन्माद्यस्य यतः' इति विष्णोः जगत्स्रष्टृत्वमुक्तम्। तत् छान्दोग्ये सतः प्रतीयते। सच्चात्र प्रधानम्। 'बहुस्यां प्रजायेय' (छां. ७.) इति सतः विकारित्वात्। विष्णुस्तु 'अविकारः सदा शुद्धः' इति निर्विकारः। सति 'एकमेवाद्वितीयम्' 'सन्मूलाः' 'सता सोम्य तदा संपन्नः' (छां. ६.) इति ब्रह्मलक्षणानां श्रुतत्वात् सदत्र न केवलम् उपादानकारणमिति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ओं ईक्षतिकर्मव्यपदेशात् सः ओं ॥ इति।

अत्र सच्छब्दः विष्णुनिष्ठः। 'स ऐक्षत' इति तत्र ईक्षति-व्यापारस्य श्रुतत्वात्। जडे च प्रधाने ईक्षतेरसंभवात्। अतः विष्णुरेव स्रष्टा इति सिद्धम् ॥ १३ ॥ अ० ॥ ४ ॥

अत्र विष्णोः ईक्षितृत्वमहिमा उक्तः। तथा वेदस्य व्याख्यानं तथैव वेदोत्पन्नस्य ज्ञानस्य पुरुषार्थहेतुत्वमर्थात् सिद्धं वेदमहत्वम् ॥

## ५. पञ्चमं दहराधिकरणम् । सूत्राष्टकम् ।

१. 'एतस्य वा अक्षरस्य' इति विष्णोः चन्द्रादित्याद्याधारत्वं यदुक्तं तत् छान्दोग्ये 'दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्तर आकाशः तस्मिन् यदन्तः तदन्वेष्टव्यम् तद्वाव विजिज्ञासितव्यम्' इति हृत्पद्मस्थस्योच्यते । हृत्पद्मस्थश्च आकाशः । 'दहरोस्मिन्नन्तर आकाशः' इति हृत्पद्मे आकाशस्य श्रवणात् । तस्यैव 'उभे अस्मिन्' इति सर्वाधारत्वोक्तेः । अत्र आकाशो न विष्णुः । 'तस्यान्ते सुषिरम्' इति प्रसिद्ध एवायमाकाशः । हृत्पद्मस्थत्वेन जीवोपि श्रुतः । उत्तरत्र 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मा' इति श्रवणात् । अतो चन्द्राद्याधाराक्षरं विष्ण्वन्यदेवेति प्राप्ते समादधत् सूत्रम् ।

॥ ओं दहर उत्तरेभ्यः ओं ॥ इति ।

दहरपद्मस्थो विष्णुरेव । उत्तरवाक्योक्तगुणेभ्यः । 'य आत्मापहतपाप्मा' इत्यादिना उत्तरवाक्येन हृत्पद्मस्थस्य अपहतपाप्मत्वादिगुणोक्तेः इति भावः । 'यो अशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृ. ५.) 'सएषः सर्वेभ्यः पाप्मभ्यः उदितः' (छां. १.) इति विष्णो अपहतपाप्मत्वमुक्तम् । एते गुणाः अन्यत्र विष्णुसापेक्षाः । 'अशनायादिकानन्ये तत्प्रसादात्तरन्ति हि' इति पाद्मवचनात् । सापेक्षनिरपेक्षयोः निरपेक्षं स्वीकर्तव्यम् ॥ १४ ॥

२. अत्रैव युक्त्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ओं ॥ इति ।



'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विंदति' इति सुप्तस्य ब्रह्मगतिः ब्रह्मशब्दश्च उच्यते । अतः विष्णुरेव हृदयपद्मस्थः । अरश्चह वैण्यश्च अर्णवौ ब्रह्मलोके' (छां. ८.) इति अरण्याख्यसुधासमुद्राश्रयलोकत्वलिङ्गं चात्र वर्तते । तस्य विष्णुलोकैकलिङ्गत्वं हिशब्देन सूच्यते । तथा दृष्टम् 'अरश्च वैण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ द्वौ' इति तस्यैतल्लक्षणमिति अनेन सिध्यति ॥ १५ ॥

३. अत्रैव हेत्वन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेः ओं ॥ इति ।

विष्णुरेव हृत्पद्मस्थः । 'एष सेतुर्विधृतिः' (छां. ८.) इति धृतेः । 'एष भूताधिपतिः भूतपालः (बृ. ६.) इत्याद्यस्य महिम्नः अस्मिन् उपलब्धेः । विधृतिः धारणसमर्थः । सेतुः आश्रयः । 'एतस्मिन्खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च' इत्यादिना सेतुत्वादिः तस्य विष्णोरेव महिमा इति ॥ १६ ॥

४. अत्रैव युक्त्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं प्रसिद्धेश्च ओं ॥ इति ।

'दहरं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहरम्' (महाना. १०.) इति विष्णोः हृत्पद्मस्थत्वप्रसिद्धेः हृत्पद्मस्थो विष्णुरेव । सुषिरश्रुतिः तदन्तस्थविष्ण्वपेक्षया प्रवृत्ता ॥१७॥

५. विष्णोः हृत्पद्मस्थत्वम् आक्षिप्य समादधत् सूत्रम् ।

॥ ओं इतरपरामर्शात् स इति चेन्न असम्भवात् ओं ॥ इति ।

'परं ज्योतिः' इत्युक्तस्य जीवस्य 'एष आत्मा' ( छां. ८. ) इति हृत्पद्मस्थत्वेन परामर्शात् जीव इति चेन्न । हृत्पद्मे अपहतपाप्मत्वादि श्रूयते । तच्च जीवे असम्भवात् । मुक्तजीवेऽपि तत्र अस्वतन्त्रत्वात् । अतः हृत्पद्मस्थः न जीवः विष्णुरेव ॥ १८ ॥

६. तत्रैव पुनरपि आक्षेपं परिहरत् सूत्रम् ।

॥ ओं उत्तराच्चेदाविर्भूतस्वरूपस्तु ओं ॥ इति ।

जीवस्य 'स तत्र पर्येति जक्षन् क्रीडन्रममाण ' इति उत्तरवचनात् जीवस्य सत्यकामत्वप्रतीतेः तत एव विशोकत्वात् स एव हृत्पद्मस्थः इति चेन्न । 'परंज्योतिः ' इति वाक्ये मुक्तजीवस्योक्तिः । उपसंपद्येति भगवतः प्रसत्त्या तस्य अपहतपाप्मत्वादिगुणाविर्भावः उक्तः । अतो जीवगुणस्य परमेश्वराधीनत्वात् दातृप्रतिगृहीत्रोः दातुरेव मुख्यत्वात् विष्णुरेवात्रोक्तो हृत्पद्मस्थः (अत्र अधीनत्वं प्रतिगृहीतृत्वम्) ॥ १९ ॥

७. अमुख्यवृत्त्या जीवः हृत्पद्मस्थः किं न स्यात् इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं अन्यार्थश्च परामर्शः ओं ॥ इति ।

एष इति परमात्मार्थश्च परामर्शः । अत्र यं परंज्योतिराख्यं विष्णुं अभिसंपद्य जीवः स्वेन रूपेण अभिनिष्पद्यते स एष आत्मेति तं विष्णुमेव एष इति परामृश्य तस्य आत्मत्वमुक्तम् । अतः विष्णुरेव हृत्पद्मस्थः ॥ २० ॥



८. अत्रैव आक्षेपं परिहरत् सूत्रम् ।

॥ ओं अल्पश्रुतेरिति चेत्तदुक्तम् ओं ॥ इति ।

विष्णोः दहर इति अल्पस्थानस्थितत्वम् इति चेत् तत् नानुपपन्नम् । पूर्वं निचाय्यत्वात् व्योमवदित्युक्तत्वात् । अत एव 'एष म आत्मा ' (छां. ३. १४.) इति विष्णोः ज्यायस्त्वेनैव हृत्पद्मस्थत्वम् उच्यते । अतो विष्णुः हृत्पद्मस्थः सर्वाधारश्च इति सिद्धम् ॥ २१ ॥ अ० ॥ ५ ॥

अत्र अपहतपाप्मत्वादयो महिमान उक्ता हरौ । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ६. षष्ठम् अनुकृत्यधिकरणम् । सूत्रद्वयात्मकम् ।

१. अदृश्यत्वादिगुणकत्वमुक्तं विष्णोः । तच्च काठके आनुकूल्येन गृह्यमाणस्योच्यते । आनुकूल्येन गृह्यमाणं ज्ञानिसुखम् । 'तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतम्' इति ज्ञानिसुखस्य प्रकृतत्वात् । तथा च न विष्णुः अदृश्यत्वादिगुणक इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं अनुकृतेः तस्य च ओं ॥ इति ।

तत्रैव काठके 'तमेव भान्तमनुभाति सर्वम् ' इति अनुकृतेः । 'तस्य भासा सर्वमिदं विभाति ' इति वचनात् जगतः तत्प्रभा-प्रकाश्यत्वप्रतीतेश्च विष्णुरेव 'कथं नु तद्विजानीयाम् ' इत्यादिना

आनुकूल्येन गृह्यमाणः । तस्य सुखरूपत्वातिशयेन नपुंसकसुखश्रुतिरपि उपपन्ना । अतः नारायणभासा सर्वं भाति । ज्ञानिसुखं सर्वं नानुभाति । तद्भासा च न सर्वं भाति । 'अहं तत्तेजोरश्मीत्' इत्यत्र 'रश्मीत्' इति सूर्यादितेजसां नारायणाधीनत्वमुक्तम् । तेज इति सर्वजगत्प्रकाशकत्व-मुच्यते । नारायणभासा तदधीनभासा तदीयभासा च सर्वं सूर्यादिजगत् भाति प्रकाशते प्रकाश्यते च ॥ २२ ॥

२. एतल्लिङ्गद्वयस्य विष्णुनिष्ठत्वविषये स्मृतिमुदाहरत् सूत्रम् ।

॥ ओं अपि स्मर्यते ओं ॥ इति ।

न केवलमेतत् श्रूयते अपि तु स्मर्यतेऽपि । 'यदादित्यगतं तेजो तत्तेजो विद्धि मामकम्', 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इति आनुकूल्येन गृह्यमाणस्य सूर्याद्यप्रकाश्यत्वमुच्यते । आनुकूल्येन गृह्यमाणो विष्णुरेव । सर्वप्रकाशकत्वात् ॥ २३ ॥ अ० ॥ ६ ॥

अत्र सर्वप्रकाशकत्वेन आनुकूल्येन गृह्यमाणत्वादिमहिमा विष्णोरुच्यते । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य पुरुषार्थहेतुत्वमर्थात् सिद्धं वेदमहत्वम् ॥

## ७. सप्तमं शब्दाधिकरणम् । सूत्रद्वयात्मकम् ।

१. विष्णोः जिज्ञास्यत्वमुक्तम् । तच्च काठके ईशानस्य प्रतीयते । 'ईशानो भूतभव्यस्य' इत्युक्त्वा 'ऊर्ध्वं प्राणम्' इत्यादौ 'विश्वेदेवा उपासते' इति । उपासना जिज्ञासैव । अयमीशानः



वायुः । तस्य अत्र वाक्ये प्राणव्यवस्थापकत्वमध्यमत्वसर्वदेवोपास्यत्व-श्रवणात् । 'यथा सम्राडेव अधिकृतान् विनियुङ्क्ते ....एवमेवैष प्राणः इतरान्' (प्र. ३.) इत्यादिना प्राणव्यवस्थापकत्वस्य वायुलिङ्गत्व-श्रवणात् । वायोः देवोपास्यत्वेन मोक्षदातृत्वमपि उपपन्नम् इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं शब्दादेव प्रमितः ओं ॥ इति ।

ईशानोऽत्र विष्णुः प्रमितः । 'मध्ये वामनमासीनं विश्वे देवा उपासते' इति वामनश्रुतेः । श्रुतिः निरवकाशा । अन्यपरलिङ्गानि सावकाशानि ॥ २४ ॥

२. विष्णुः सर्वत्रगः ईशानस्तु अङ्गुष्ठमात्रः । अत ईशानो न विष्णुः इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं हृद्यपेक्षया तु मनुष्याधिकारत्वात् ओं ॥ इति ।

हृदि विद्यमानः आकाशः अङ्गुष्ठमात्रः । अतः तत्स्थः विष्णुरपि अङ्गुष्ठमात्रः । अयं च मनुष्यापेक्षया उक्तः । तस्यैव वेदविद्योपास-नाधिकारात् । अतो ईशानो विष्णुः जिज्ञास्यश्च इति सिध्यति ॥ २५ ॥ अ० ॥ ७ ॥

अत्र सर्वप्रेरकत्वाख्यमहिमा विष्णोरुक्तः । तथा वेदस्योपपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ८. अष्टमं तदुपर्यप्यधिकरणम् (देवताधिकरणम्) । सूत्राष्टकम् ।

१. मनुष्याणामेव वेदविद्याधिकारः उक्तः । स च 'विश्वे

देवा उपासते ' ( क. ) इति देवानामपि प्रतीयते । तथापि न देवानां वेदविद्याधिकारः । अर्थित्वाभावात् । मुक्त्यर्थं तेषामर्थित्वे तदुद्देशेन त्यागाभावात् कर्मादिविरोधः स्यात् इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं तदुपर्यपि बादरायणः सम्भवात् ओं ॥ इति ।

मनुष्याणां सतां देवादित्वप्राप्त्युपर्यपि तेषां वेदविद्याधिकारः अस्त्येव । तेषां अधिकारोपयोगिनः विशिष्टबुद्ध्यादिमत्वात् । विद्याकर्मभ्यां योग्यमनुष्याणां देवादित्वप्राप्तिः विद्याभिः तेषां मोक्षश्च इति बादरायणीयं मतम् । बादरायणशब्देन अत्र विषये विप्रतिपत्तिः सूच्यते । पूर्वं मनुष्याणां वेदविद्याधिकार इति तिर्यगादिव्यावृत्त्यर्थम् उक्तम् । विशिष्टबुद्ध्यादिमत्वं मनुष्यत्वम् । तदेव विद्याधिकारोपयोगि । तच्च देवानामस्त्येव । तेन जरितार्यादीनां पक्षिविशेषाणां संग्रहः । तेषामपि विशिष्टबुद्ध्याद्यङ्गीकारात् ॥ २६ ॥

२. देवानां वेदविद्याधिकारम् आक्षिप्य समादधत् सूत्रम् ।

॥ ओं विरोधः कर्मणि इति चेन्न अनेकप्रतिपत्तेः दर्शनात् ओं ॥ इति ।

देवानां वेदविद्याधिकारित्वार्थे सादिविनाशित्वे पूर्वकल्पे प्रयुक्तकर्मणि उद्देशाभावात् वैयर्थ्याख्यविरोधः स्यात् । देवानां नित्यत्वे तेषामनधिकारः स्यात् इति आक्षेपः । परिहारस्तु एतद्देवानां पूर्वम् अभावेऽपि देवान्तरसद्भावात् । अनेकेषां योग्यमनुष्याणां पूर्वं पूर्वं देवतापदप्राप्तेः श्रुत्युक्तत्वात् । 'यज्ञेन यज्ञमयजन्त देवाः तानि धर्माणि प्रथमान्यासन् । तेह नाकं महिमानः सचन्त । यत्र पूर्वे साध्याः सन्ति



देवाः ' ( पु. ) इति । अस्या अर्थस्तु देवाः देवत्वयोग्याः मनुष्याः यज्ञेन ज्ञानकर्मात्मकेन (जिज्ञासया) यज्ञं भगवन्तं अयजन्त । ततः ते ज्ञानपूर्वकर्मणा स्वपदं प्राप्य मुख्यलोकधारकाः अभवन् । ते महात्मानो देवाः स्वाधिकारावसाने पूर्णसुखात्मकं मोक्षं प्राप्नुवन् । यत्र मोक्षे पूर्वकल्पे मुक्ताः साध्याः देवाः सन्ति इति ॥ २७ ॥

३. पुनः उक्तमाक्षिप्य समादधत् सूत्रम् ।

॥ ओं शब्द इति चेन्न अतः प्रभवात् प्रत्यक्षानुमानाभ्यां ओं ॥ इति ।

अत्र शब्द इत्यनन्तरं विरोधपदाकर्षणम् । तथा च 'शब्दविरोध इति चेन्न ' इति सूत्रवाक्यम् । शब्दविरोध इत्यस्य देवानाम् उत्पत्तिनाशे वेदाप्रामाण्याख्यविरोध इत्यर्थः। 'वाचा विरूपनित्यया' इति वेदस्य नित्यत्वात् तस्य अनित्यदेवानां वाच्यत्वात् वेदस्य वाच्यहीनत्वसंभवात् तस्य प्रामाण्यासंभवात् इति भावः । अयमाक्षेपः । स न युज्यते । आक्षेपपरिहारस्तु सूत्रे ' न ' इत्यादिना क्रियते । तथा हि । वेदः नित्य एव । ' सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् ' (महाना. १.) इति प्रतिकल्पं यथा विष्णुः ( सूर्याचन्द्रमसौ ) अकल्पयत् तथा अस्मिन् कल्पेऽपि । अतो देवानां प्रभवात् सदासद्भावः । यथा ऋतुषु नानारूपाणि दृश्यन्ते तथा युगादिषु । तथा महतां प्रत्यक्षम् । अनुमानमपि 'उपरितनकालो देववान् कालत्वात् अतीतादिकालवत् ' इत्यादि । प्रलयस्य प्रमाणसिद्धत्वात् न कालत्वहेतोः व्यभिचारः । तथा च देवाः प्रवाहनित्याः । सर्वजगदभावः प्रलयः ॥ २८ ॥

४. अत्र युक्त्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं अत एव च नित्यत्वम् ओं ॥ इति ।

वेदो नित्यः । अत एव देवप्रवाहो नित्यः । न देवानां नित्यत्वम् । 'सूर्याचन्द्रमसौ' इति उत्पत्तिश्रुतेः । 'नासदासीत् नो सत्' इत्यादि प्रलयश्रुतेश्च । जातिसङ्केतादिसर्वमपि ईश्वररचितत्वादुपपन्नम् । इति परेणोक्तवेदनित्यत्वान्यथानुपपत्त्यैव सिध्यति ॥ २९ ॥

५. देवानाम् उत्पत्तिः वेदनित्यत्वविरुद्धा । नानाविधनामरूपवतां वाचकस्य वेदस्य अप्रामाण्यं भवत्येवेत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं समाननामरूपत्वाच्च अवृत्तावपि अविरोधो दर्शनात्
स्मृतेश्च ओं ॥ इति ।

वेदस्य प्रामाण्यं संभवत्येव देवप्रवाहस्य नित्यत्वात् । प्राचीनाः देवाः मुक्ताः । तथापि तदन्ये तत्समानरूपाः उत्पद्यन्ते । तस्मात् प्राप्तपदानां देवानामवृत्तावपि विरोधो नास्ति । अतो वेदः प्रमाणम् । 'यथा पूर्वम्' इति दर्शनात् । 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ' इत्यादि स्मृतेश्च । ' स्वयंभुवा स्वतन्त्रेण विष्णुना या वेदवागुच्चारिता तद्वेदगतशब्देभ्यः ब्रह्मादिबुधानां नामानि निर्ममे । तान् शब्दान् तेषु सङ्केतितवान् । याश्च वेदेषूक्ताः दृश्यन्त इति दृष्टयो रूपाणि तानि च तथैव निर्ममे इति सर्वदेवानां समाननामरूपत्वस्य अपौरुषेयवेदस्यापि स्वतन्त्रेण भगवता प्रतिकल्पं देवेषु सङ्केतितत्वात्



अस्य चोक्तेः । न च प्रलये वेदाप्रामाण्यं शंक्यम् । तदा अतीतविषयत्वस्य भगवन्मात्रविषयत्वस्य उपपत्तेः । तदेत्युक्तकालेपि भगवत्परः इति सर्वं सुक्तमिति भावः ॥ ३० ॥

६. पुनः तत्र आक्षेपान्तरं परिहरत् सूत्रम् ।

॥ ओं मध्वादिषु असंभवादनधिकारं जैमिनिः ओं ॥ इति ।

वेदविद्याः द्विविधाः मुक्त्यर्थाः तदितराः इति । इतरविद्याः ब्रह्मविद्या-कर्मविद्या-भेदात् द्विविधाः । यथा मधुविद्या अग्निष्टोमविद्या च । तत्र इतरविद्याः न देवानां युक्ताः । प्राप्तपदत्वतः मोक्षेतरफलार्थम् अर्थित्वाभावाच्च इति जैमिनिराह ॥ ३१ ॥

७. तर्हि देवानां सर्वज्ञानमित्यादि मोक्षसाधनविद्यासु अर्थित्वं संभवतीति आशङ्कां निवर्तयत् सूत्रम् ।

॥ ओं ज्योतिषि भावाच्च ओं ॥ इति ।

ज्योतिषि सर्वज्ञत्वे वस्तूनां भावात् । देवानां सर्वज्ञत्वेन मोक्षसाधनविद्यास्वपि अधिकारो न विद्यते । तदुक्तोपासने अर्थित्वाभावात् । तेषां सर्वज्ञत्वेन सर्वविद्योक्तज्ञानवत्वात् इति भावः ॥ ३२ ॥

८. देवानामधिकारं समर्थयत् सूत्रम् ।

॥ ओं भावं तु बादरायणोऽस्ति हि ओं ॥ इति ।

बादरायणो भगवान् देवानाम् अशेषविद्यासु अधिकारः अस्तीति मन्यते । भगवदितरेषां निरुपचरितसार्वज्ञ्याभावात् । विद्या-

विचारेण ज्ञानविशेषसंभवात् । 'यावत्सेवापरे तत्त्वे तावत्सुखविशेषता' (स्कान्दे) इत्यादेः ।

जैमिन्यादयः व्यासमतैकदेशमाश्रित्य प्रवर्तन्ते इति न विरोधः । 'सर्वज्ञस्यैव कृष्णस्य एकदेशविचिन्तितम् । स्वीकृत्य मुनयो ब्रूयुः' इत्यादेः । अत्र देवानां प्राप्तपदविषये अधिकाराभावात् तत्र न विरोधः इत्यर्थः ॥ ३३ ॥ अ० ॥ ८ ॥

अत्र सर्वदेवोपास्यत्वं हरेः समर्थितम् । तथा वेदस्य व्याख्यानं वेदोत्पन्नस्यैव तद्ज्ञानस्य पुरुषार्थसाधनत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

## ९. नवमं शुगस्याधिकरणम् । (अपशूद्राधिकरणम्) । सूत्रपञ्चकम् ।

अत्र त्रिवर्णेतरस्य वेदोक्तब्रह्मविद्याधिकारो निरस्यते ।

१. मनुष्याणां वेदविद्याधिकारः उक्तः । शूद्रस्यापि मनुष्यत्वात् तस्य यद्यधिकारोऽङ्गीक्रियते तर्हि श्रुत्यादिविरोधः । यदि नाङ्गीक्रियते तर्हि छान्दोग्ये 'अहहारे त्वा शूद्र' (छां. ४.) इत्युक्तस्य पौत्रायणस्य संवर्गविद्याध्ययनदर्शनात् तद्विरोध इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ओं ॥ इति ।

न पौत्रायणः शूद्रः । सः शुचाऽऽद्रवणादेव शूद्र इति संबोधितः न वर्णेनावरत्वनिमित्तेन । तस्य अनादरः हंसकृतः । अनादरकृतशोकस्तु 'सह संजिहान एव क्षत्तारमुवाच' (छां.) इति वाक्येन अवगम्यते । शुग् द्रव एव शूद्रः रुग् द्रव एव रुद्र इतिवत् इत्यर्थः ॥ ३४ ॥



२. यौगिकार्थे किं निमित्तम् । रूढार्थ एव स्यात् । अतो पौत्रायणः शूद्र इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ओं ॥ इति ।

'अयमश्वतरी रथः' (छां.) इति चैत्ररथसंबन्धित्वलिङ्गमुत्तरत्र श्रूयते । ततः तत्र पौत्रायणस्य क्षत्रियत्वमवगम्यते । रथः वेदाविनाभूतः । 'यत्र वेदो रथस्तत्र' (ब्र. वै.) इति । शूद्रस्य वेदाभावात् तस्य न रथित्वम् । अपलायनं च शूद्रस्य विप्ररक्षार्थे इत्यादि यदुक्तं तत् पदातितया इति ध्येयम् इति भावः ॥ ३५ ॥

३. शूद्रस्य वेदाधिकारं अङ्गीकृत्य तस्य रथित्वं कुतो नोच्यते इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं संस्कारपरामर्शात् तदभावाभिलापाच्च ओं ॥ इति ।

शूद्रस्य न वेदाधिकारः । 'अष्टवर्षं ब्राह्मणमुपनयीत' इति वेदाध्ययनस्य संस्कारापेक्षत्वात् । 'नाग्निर्न यज्ञो न क्रिया न संस्कारो न व्रतानि शूद्रस्य' इति पैङ्गिश्रुतौ शूद्रस्य संस्काराभाववचनात् । उत्तमस्त्रीणां न शूद्रवत् । 'सपत्नीं मे पराधम' इत्यादिना शच्यादिवाक्येन स्त्रीणां अधिकारदर्शनात् । तासां प्रदानकर्मैव संस्कारप्रतिनिधिः ॥ ३६ ॥

४. शूद्रस्य संस्कारः संभवति । संस्काराभावस्यैवोक्तत्वात् । निषेधस्यानुक्तत्वात् इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं तदभावनिर्धारणे च प्रवृत्तेः ओं ॥ इति ।

गौतमः सत्यकामस्य 'नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि' (छां.) इति वचनेन आर्जवं ज्ञात्वा 'नैतदब्राह्मणो विवक्तुमर्हति' इति शूद्रत्वाभावं निर्धार्य तदुपनयने प्रवृत्तः। अनेन शूद्रोपनयननिषेधः सिध्यति इति भावः॥ ३७ ॥

५. अब्राह्मणपदेन अनुपनीतस्य ग्रहणं युक्तम्। ब्राह्मणपदेन ब्राह्मणनयोग्यानां त्रैवर्णिकानां ग्रहणात्। योग्यत्वं चात्र विशिष्ट-बुध्यादिमत्वम्। तथा च वेदाधिकारसाधकविशिष्टबुध्यादिमत्वं शूद्रेऽप्यस्ति। अतश्शूद्रो वेदविद्याधिकारी इत्याशङ्कां परिहरत् सूत्रम्।

॥ ओं श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ओं॥ इति।

अनिषिद्धत्वे सति विशिष्टबुध्यादिमत्वम् अधिकारे प्रयोजकम्। शूद्रस्य वेदश्रवणतदध्ययनतदर्थावधारणानां 'नाग्निर्न यज्ञः शूद्रस्य' इति 'श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम्' (गौ. ध. १२) इत्यादिना प्रतिषेधात्। न शूद्रो वेदविद्याधिकारी। विदुरादीनां पूर्व-जन्मन्युत्पन्नापरोक्षज्ञानात् इतरशूद्रेभ्यो वैशिष्ट्यम्। अतः विष्णुः शूद्रादिभिः वेदविद्यया ज्ञेयो न भवति इति भावः॥३८॥ अ०॥९॥

अत्र वेदविद्यया शूद्राद्यवेद्यत्वं भगवन्महिमोच्यते। तथा वेदस्य उपपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्वम्॥

## १०. दशमं कम्पनाधिकरणम्। एकं सूत्रम्।

'तमेवं विद्वान्' इति विष्णुज्ञानान्मोक्ष उक्तः। स च



मोक्षः काठके 'यदिदं किं च' 'महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' इति वज्रज्ञानात् श्रूयते। इन्द्रायुधमेवेदं वज्रम्। वज्रश्रुतेः तत्र रूढत्वात्। तस्य उद्यतत्वोक्तेः तस्य आयुधत्वात्। तच्च न विष्णुः इति प्राप्ते समादधत् सूत्रम्।

॥ ओं कम्पनात् ओं॥ इति।

अयं वज्रो विष्णुरेव। 'यस्मादेजति' (जगत् यत्प्रेरणया चेष्टते) इति सर्वजगच्चेष्टकत्वात् अस्य वज्रस्य। तस्य 'को ह्येवान्यात् कः प्राण्यात्' इति निरवकाशलिङ्गत्वात् वज्रो विष्णुरेव। 'आयुधानां अहं वज्रम्' 'वर्जनात् वज्र उच्यते' इत्यादेः॥३९॥ अं०॥१०॥

अत्र विष्णोः सर्वचेष्टकत्वरूपवज्रत्वमहिमा उच्यते। तथा वेदस्य उपपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम्॥

## ११. एकादशं ज्योतिरधिकरणम्। एकं सूत्रम्।

अत्र ज्योतिर्नाम्नः हरौ समन्वयः क्रियते। ज्योतिश्चरणाभि-धानादिति हृदय आहितं ज्योतिः विष्णुरित्युक्तम्। 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः' इति वाजसनेयके 'जीव एवेदं ज्योतिः' इति प्रतीयते। तत्र 'स समानः सन्नुभौ लोकौ अनुसंचरति' इति कर्मवशात् लोकसंचरणरूपजीवलिङ्गादेव। तत्रैव अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः संसृज्यते .... स्वप्नान्ते .... भयानिव पश्यन्' इत्यादि यदुक्तं तत् जीवलिङ्गमेव। किं च 'किं ज्योतिरयं

पुरुष इति आदित्यज्योतिः सम्राडिति हो वाच ' इत्यादिना यस्य पुरुषस्य आदित्यादिज्योतिष्ट्वमुक्तं तस्यैव ' आत्मैवास्य ज्योतिः ' इति श्रुत्यादौ आत्मज्योतिष्ट्वोक्तौ कतम आत्मेति तदात्मप्रश्ने ज्योतिः इत्युच्यते । विष्णोः आदित्यज्योतिष्ट्वं न सम्भवति । ' न तत्र सूर्यो भाति ' इत्यादेः । अतो जीव एवेदं ज्योतिरिति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं ज्योतिर्दर्शनात् ओं ॥ इति ।

विष्णुरेवेदं ज्योतिः । न जीवः । ज्योतिश्रुतेः विष्ण्वैकनिष्ठत्व-श्रुतेः । ' विष्णुरेव ज्योतिः ......' इति चतुर्वेदशिखायाम् । जीव-मादाय विष्णोरुभयलोकसंचारः 'प्राज्ञेनात्मना अन्वारूढः उत्सर्जद्याति' इत्यादिना प्रतीयते । कतम आत्मेति आत्मशब्दार्थः विष्णुरेव । 'भावे अभावे सूर्यादेः जीवानां विष्णुरेव ज्योतिः ' इत्युक्तत्वात् । जीवपक्षे बहुबाधकसत्वात् । ''सिद्धस्य तस्य विषये कतम इति प्रश्नायोगाच्च । तस्मात् इदं प्रागुक्तं च ज्योतिः विष्णुरेव ॥ ४० ॥अ० ॥ ११ ॥

अत्र ब्रह्मणः सर्वज्योतिष्ट्वमहिमा उच्यते । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेद-महत्वम् ॥

## १२. द्वादशम् आकाशोर्थान्तराधिकरणम् । एकं सूत्रम् ।

अत्र आकाशनाम्नः समन्वयः विष्णौ क्रियते । द्युभ्वाद्यायतनम् इति विष्णोरुक्तं सर्वाधारत्वं छन्दोगश्रुतौ ' आकाशो वै नामरूपयो-



र्निर्वहिता ' इति आकाशस्य प्रतीयते । न च आकाशशब्दः विष्णुपरः । तस्य आकाशे रूढत्वात् । वैनामेति निपातद्वयं तस्य शब्दस्य आकाशे प्रसिद्धिं द्योतयति इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं आकाशो अर्थान्तरत्वादिव्यपदेशात् ओं ॥ इति ।

विष्णुरेवायमाकाशः । अस्य आकाशस्य ' ते यदन्तरा तद्ब्रह्म ' इति नामरूपराहित्यरूपार्थान्तरव्यपदेशात् । तद्ब्रह्मेति ब्रह्मत्वव्यपदेशाच्च । आदिपदेन अनामत्वमुच्यते । ते नामरूपे अन्तरा विना वर्तते इत्यर्थः । ' अवर्णम् ' ' यतो वाचो निवर्तन्ते ' इति तस्यैव हि लक्षणम् । ' अनामासोप्रसिद्धत्वात् अरूपो भूतवर्जनात् ' इति ब्राह्मे । अतोऽय-माकाशो विष्णुरेव । स एव सर्वाधारः । तस्य नामरूपनिर्वहितृत्वस्य लोकप्रसिद्ध्यभावेपि 'एको दाधार भुवनानि विश्वा' इत्यादिवेदप्रसिद्धिः वर्तते ॥ ४१ ॥ अ० ॥ १२ ॥

अत्र अवर्णत्वारूपत्वनिमित्तकसर्वातीतत्वं तथा नामरूप-निर्वहितृत्वं वेदैकप्रसिद्धत्वं च विष्णोरुक्तम् । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## १३. त्रयोदशं सुषुप्त्यधिकरणम् । एकं सूत्रम् ।

अत्र स्वप्नादिदर्शनलिङ्गस्य विष्णौ समन्वयः क्रियते । 'असंगम-रसम्' इति विष्णोः असङ्गत्वमुक्तम् । तच्च वाजसनेयके स्वप्नादिद्रष्टुः प्रतीयते । ' स्वप्नायैव यत्तत्र किञ्चित्पश्यति अनन्वागतः तेन भवति

असङ्गोऽयं पुरुष ' इति । स च स्वप्नादिद्रष्टा जीव एव, प्रसिद्धेः । तस्य परमात्माभेदेन चैतन्यविवक्षया असङ्गत्वमपि युज्यते । ईश्वरस्य स्वप्नाद्यभावात् इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं सुषुप्त्युत्क्रान्त्योर्भेदेन ओं ॥ इति ।

स्वप्नादिद्रष्टा विष्णुरेव । सुषुप्त्युत्क्रान्तिप्रकरणयोः भेदेनैव जीवेशयोः उक्तत्वात् न जीवेशाभेदः । ' प्राज्ञेनात्मना सम्परिष्वक्तः न बाह्यं किञ्चन वेद नान्तरम् ' ( बृ. ) इति । ' प्राज्ञेनात्मनान्वारूढः उत्सर्जंयाति ' इति च भेदव्यपदेशात् । सुषुप्तिप्रकरणस्य मोक्षपरत्वस्यापि संभवात् । ' स्वाप्ययसम्पत्योः अन्यतरापेक्षमाविष्कृतं हि ' इति हि सूत्रम् । स्वाप्नपदार्थानां जीवगतावस्थायाश्च सत्यत्वात् सर्वज्ञस्येश्वरस्य स्वप्नादिद्रष्टृत्वं युक्तमेव । अतो विष्णुः स्वप्नादिद्रष्टा असंगश्च इति सिद्धम् । अनेन विष्णोः जीवभेदोऽपि सिध्यति इति भावः ॥ ४२ ॥ अ० ॥ १३ ॥

अत्र स्वप्नादिद्रष्टृत्वं असङ्गत्वं जीवविलक्षणत्वं च महिमा विष्णोः उक्तम् । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## १४. चतुर्दशं पत्याद्यधिकरणम् । एकं सूत्रम् ।

पूर्वं विष्णोः नित्यमहिमा उक्तः । अनन्यापेक्षया जगत्स्रष्टेति उपपादनात् । स च वाजसनेयके ब्राह्मणस्य प्रतीयते । ' एष नित्यो महिमा ब्राह्मणस्य ' ( बृ. ६. ) इति । ब्राह्मणः विरिञ्चः । ' स वा



एष महानज आत्मा ' इति अजशब्दात् । अनेन महिम्ना विष्णु-विरिञ्चयोरभेदोऽपि ज्ञायते इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं पत्यादिशब्देभ्यः ओं ॥ इति ।

अत्र ब्राह्मणनाम्नस्समन्वयः विष्णौ क्रियते । विष्णुरेवायं ब्राह्मणः । तस्य सर्वाधिपत्यादिवाचकशब्दसद्भावात् । ' सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः एष सर्वेश्वरः एष भूताधिपतिः ' ( बृ. ) इत्यादेः । ' उतामृतत्वस्येशानः ' ( तै. आ. १. ) इति विष्णुरेव मुक्तसमुदायस्याधिपतिः । ब्रह्मणा वेदेन गम्यते इति ब्राह्मणः । न जायत इति अजः । विष्णुः न हिरण्यगर्भः । ' तत एते व्यजायन्त । विश्वो हिरण्यगर्भः ' इत्यादिभेदश्रुतिभ्यः । ' सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मिणि ' इत्यादिश्रुतिभ्यः विष्णोरेव ते शब्दाः । अतोऽयं नित्यमहिमा ब्राह्मणः विष्णुरेवेति सिद्धम् ॥ ४३ ॥ अ० ॥ १४ ॥

अत्र सर्वाधिपत्यं नित्यमहिमत्वं ब्राह्मणत्वं हिरण्यगर्भोपलक्षित-सर्वजीववैलक्षण्यं च महिमा विष्णोरुक्तः । तथा वेदस्य प्रतिपादनं तथैव वेदोत्पन्नज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

प्रथमस्य तृतीयेऽस्मिन् सूत्राणामर्थसंग्रहः ।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ॥

---

## ब्रह्मसूत्राधिकरणार्थसंग्रहः

### प्रथमाध्याये तृतीयः पादः

आद्ये तृतीयपादे ये शब्दा लिङ्गात्मकाः श्रुताः ।
विष्ण्वविष्णुपरास्तेषां प्रबलैर्हेतुभिर्हरिः ॥ १ ॥
विष्ण्वैकनिष्ठतां ग्राह श्रुतेरर्थैक्यसिद्धये ।
१ द्युभ्वाद्यायतनं विष्णावात्मत्वान्मुक्तिदत्वतः ॥ २ ॥
२ भूमा विष्णुस्सुखैः पूर्णः सर्वस्मादधिको यतः ।
३ अक्षरं तु स एवैकः शासनात्सर्वधृत्त्वतः ॥ ३ ॥
४ सदेवेत्यत्र सद्विष्णुः स ऐक्षत इति श्रुतेः ।
५ विष्णुर्दहरपद्मस्थः पापदूरत्वहेतुतः ॥ ४ ॥
६ अनुकूलतया चासौ गृह्यमाणोऽतिसौख्यतः ।
७ देवोपास्यत्वतो विष्णुः प्रेरकस्समुदाहृतः ॥ ५ ॥
८ सर्वैर्वेदैरुपास्योऽयं देवताभिर्विमुक्तये ।
९ न वेदविद्यया ज्ञेयः शूद्राद्यैः प्रतिषेधतः ॥ ६ ॥
१० महाभयकरो वज्रः सर्वचेष्टाप्रदो यतः ।
११ सर्वत्र ज्योतिरेवासौ यतस्सर्वप्रकाशकः ॥ ७ ॥
१२ अरूपत्वादनामत्वादाकाशो विष्णुरेव हि ।
१३ स्वप्नादेर्मुख्यदर्शी च सार्वज्ञात्सर्वतः परः ॥ ८ ॥
१४ वेदवेद्यत्वतो नित्यमहिमा ब्राह्मणो ह्यजः ।
तस्मात्सर्वपतिर्विष्णुः मुक्तानामीश्वरः श्रुतेः ॥ ९ ॥

---

ॐ तत्सत्

श्रीवेदव्यासाय नमः । श्रीगुरुभ्यो नमः । हरिः ॐ ।

### अथ प्रथमाध्याये चतुर्थः पादः

अत्र एकोनत्रिंशत् सूत्राणि । सप्त अधिकरणानि ।

अत्र पादे समन्वयस्य असाधारण्यम् एवं वर्तते ।

(१) पूर्वं लोकप्रसिद्ध्या अन्यत्ररूढानां इन्द्रादिशब्दानां श्रुतिलिंगादिभिः विष्णौ समन्वयः प्रतिपादितः । अत्र तु श्रुतिलिङ्गादिभिरेव अन्यत्र प्रसिद्धानां शब्दानां विष्णौ समन्वयः क्रियते । त एव अन्यत्रैव प्रसिद्धाः शब्दाः इति कथ्यन्ते ।

(२) पूर्वं श्रुत्यादिनैव समन्वयो निगदितः । अत्र तु श्रुत्यादीनां प्राबल्यमाश्रित्य समन्वयः क्रियते ।

(३) पूर्वं स्रष्टृत्वादिगुणवाचिनां शब्दानां समन्वयः कृतः । अत्र तु स्वरवर्णपदात्मकानां सर्वेषां शब्दानां समन्वयः सामस्त्येन क्रियते।

(४) जन्मादिसूत्रे जन्मादिकारणत्वगुणग्रहणं कारणस्य अखिलगुण-साधकम् अन्यगुणोपलक्षकं च । तथापि कतिपयशब्दाः न निखिलगुणवाचकाः । अतः समस्तशब्दानां प्रबलहेतुभिरत्र विष्णौ समन्वयः प्रदर्श्यते ।

#### १. प्रथमम् आनुमानिकाधिकरणम् । सूत्रनवकम् ।

१. तत्तु समन्वयादिति सर्वशब्दवाच्यत्वं विष्णोरुक्तम् ।

तथापि काठकादौ 'महतः परमव्यक्तम् अव्यक्तात् पुरुषः परः' 'जीवा एव तु दुःखिनः' इत्यादौ श्रुतानाम् अव्यक्तादीनाम् आनुमानिकेत्युक्त-प्रधानादिपरत्वं प्रतीयते। अव्यक्तस्य पुरुषावरत्वश्रवणात् जीवानां च दुःखित्वात् तेषां शब्दानां विष्णुपरत्वं न संभवति इति तस्य विष्णोः सर्वशब्दवाच्यत्वं न युज्यते इति प्राप्ते तत्परिहाराय प्रवृत्तमिदं सूत्रम्।

॥ ओं आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेः दर्शयति च ओं ॥ इति।

अव्यक्तादिशब्दानां विष्णुरेवार्थः। कुतः? प्रधानादि परतन्त्रम्। ततः तत् तस्य शरीररूपकम्। कप्रत्ययः कुत्सने। विष्णुश्च तत्र विन्यस्तः। तथा च तत्संबन्धेन प्रधानादीनां तत्तच्छब्द-वाच्यत्वम्। 'तुच्छयेनाभ्वपिहितम्' इति दर्शयति च। '...... अव्यक्तमचलं ........ यो वेद हरिमात्मानं स भयादनुमुच्यते' इति पिप्पलादशाखायाम्। 'अक्षरं ब्रह्म परमम् अव्यक्तोऽक्षर उच्यते ....' इति च ॥ १ ॥

२. अव्यक्तादिशब्दाः विष्णौ मुख्याः। कुतः।

॥ ओं सूक्ष्मं तु तदर्हत्वात् ओं ॥ इति।

अव्यक्तशब्दोक्तं सूक्ष्ममेव। तच्च सूक्ष्ममेव अव्यक्तत्वमर्हति। अतः तत् अव्यक्तत्वनिश्चयोपयोगि। सूक्ष्मं तु विष्णुरेव। 'यत्तत्सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति' इति पिप्पलादशाखायाम्।



प्रधानादि अमुख्यं सूक्ष्मम्। मुख्यार्थे विष्णौ विद्यमाने अमुख्यार्थ-ग्रहणं न युक्तम् ॥ २ ॥

३. तथापि अव्यक्तादिशब्दैः विष्णुग्रहणं परावरत्वादिश्रुति-बाधितम् इति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ओं तदधीनत्वादर्थवत् ओं ॥ इति।

विष्णावेव अवरत्वादिवाचकशब्दजातम्। अन्यत्र विद्यमान-परावरत्वादि विष्ण्वधीनम्। अतः परावरत्वादिशब्दजातं विष्णावेवार्थवत्। तथा च शब्दप्रवृत्तिनिमित्तं द्विविधम्— १) अन्यगतशब्दार्थनियन्तृत्वम् २) तदधिकरणत्वं च इति। विष्णोः अवरादिपदवाच्यत्वं 'निरनिष्टो निरवद्यः' इत्यादिश्रुतेः अवरादिवस्तुनियन्तृतया सिद्ध्यति। 'नामानि सर्वाणि' इति श्रुतेः। यच्च जीवगतप्राणधारणं परमात्माधीनम्। अतः 'अनेन जीवेन' इत्यादौ स विष्णुरेव जीव इत्युच्यते। यथा 'राजा जयी' 'यमो मृत्युः' इति च। 'स बद्धः स दुःखी स बन्धयति स दुःखयति .... सोऽवरः सोऽनित्यः सोऽवरयति सोऽनित्ययति' इत्यादि-श्रुतेः प्रयोगप्रवृत्तिनिमित्तातिशयित्वं ज्ञायते। अतो विष्णुरेव अव्यक्तादि-शब्दमुख्यार्थः। 'यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते ....' इति स्कान्दे ॥ ३ ॥

४. तत्रैव हेत्वन्तरं प्रतिपादयत् सूत्रम्।

॥ ओं ज्ञेयत्वावचनाच्च ओं ॥ इति।

अव्यक्तादिश्रुतिवाच्यो विष्णुरेव। 'तमेवैकं जानथ आत्मानम्'

इति श्रुतेः । 'अमृतस्यैष सेतुः' इति ज्ञेयत्ववचनं तत्र हेतुः । 'न तादृशी प्रीतिरीड्यस्य विष्णोः गुणोत्कर्षज्ञातरि यादृशी स्यात् । तत् प्रीणनात् मोक्षमाप्नोति सर्वः' इति श्रुतेः । प्रधानादीनां ज्ञेयत्वावचनात् नाव्यक्तादिशब्दवाच्यत्वं तेषां इत्यर्थः ॥ ४ ॥

५. उक्तमाक्षिप्य समादधत् सूत्रम् ।

॥ ओं वदतीति चेन्न प्राज्ञो हि ओं ॥ इति ।

'अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति प्रधानस्य मोक्षार्थं ज्ञेयत्वमुच्यते इति चेन्न । प्राज्ञः विष्णुरेव तत्रोक्तः । 'महतो महीयान्' इति तस्यैव महतो महत्वम् । सर्वस्मात् परोऽयं महतोऽपि परः ॥ ५ ॥

६. ननु महत्परं प्रधानम् । तत्र अमुख्यार्थत्वकल्पनमयुक्तम् इति चेत् समादधत् सूत्रम ।

॥ ओं प्रकरणात् ओं ॥ इति ।

'सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्' इति वैष्णवमिदं प्रकरणम् । 'अनाद्यनन्तं महतः परं ध्रुवम्' 'पुरुषो महत्परः' इति श्रुतेः । अतो नात्रोक्तं प्रधानम् ॥ ६ ॥

७. अनाद्यनन्तवाक्यस्य विष्णुपरत्वे हेत्वन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ओं ॥ इति ।

पितृसौमनस्यस्वर्गाग्निपरमात्मनां त्रयाणामेव प्रश्नः उपन्यासश्च । अनेनं ज्ञायते प्रधानं नात्र प्रतिपाद्यत इति ॥ ७ ॥



८. ननु यत्र शब्दः प्रसिद्धः तत्र अमुख्यः मुख्यतः प्रवृत्तिनिमित्तवति मुख्य इति कथमित्युक्तौ तत्र सूत्रम् ।

॥ ओं महद्वच्च ओं ॥ इति ।

'महान्तं विभुम्' इति महत्तत्त्वे प्रसिद्धो महच्छब्दः परमात्मनि मुख्यः । तत्प्रवृत्तिनिमित्तमहत्वस्य परमात्मनि मुख्यत्वात् । एवमन्यत्र । अत्र परमात्मनि शब्दानां वाचकत्वे सिद्धे मुख्यत्वमात्रं साध्यते ॥ ८ ॥

९. अव्यक्तादिशब्दाः न परमात्मवाचका प्रधानादिवाचका एव । तेषामन्यत्रैव प्रसिद्धत्वादिति प्राप्तौ समादधत् सूत्रम् ।

॥ ओं चमसवदविशेषात् ओं ॥ इति ।

'नामानि सर्वाणि' इत्यादेः अव्यक्तादिशब्दाः परमात्मनिष्ठा एव । यथा चमसशब्दः यज्ञपात्रे प्रसिद्धोऽपि 'तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इत्यादेः श्रुतिबलात् शिरोवाचकः । अस्याः श्रुतेः 'नामानि' इत्यस्य च अनुशासनरूपत्वात् । गौणादिवृत्तीनां नानुशासनमस्ति । अतो विष्णुरेव सर्वशब्दवाच्यः ॥ ९ ॥ अ० ॥ १ ॥

अत्र विष्णोः सर्वनियामकत्वहेतुना सर्वशब्दवाच्यत्वमहिमा उक्तः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## २. द्वितीयं ज्योतिरुपक्रमाधिकरणम् । सूत्रद्वयात्मकम् ।

१. तत्रैवेति सर्वशब्दवाच्यत्वमुक्तं विष्णोः । सर्वमध्यपतिताः ज्योतिरादिशब्दाः । तेषां 'वसन्ते वसन्ते ज्योतिषा यजेत' इति कर्म

तदङ्गाभिधायकत्वेन प्रसिद्धेः रूढेश्च कर्मपरत्वाङ्गीकारेण विष्णौ निषेधे समादधत् सूत्रम् ।

॥ ओं ज्योतिरुपक्रमात्तु तथाह्यधीयत एके ओं ॥ इति ।

कर्मपरत्वेन प्रसिद्धा अपि ज्योतिरादिशब्दाः विष्णोरेव वाचकाः । 'एष इमं लोकमभ्यार्चत्' इति उपक्रम्य 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋचः इत्येव विद्यात्' इति एके शाखिनः सर्वशब्दाभिधेयत्वेन विष्णुमेवाधीयते । यत्र सर्वे घोषाः तत्र सर्वे वेदा इति किमु वाच्यम् । तथा यत्र सर्वे वेदाः तत्र सर्वा ऋच इति किमु वाच्यम् । इति ज्योतिरादयः विष्णुवाचका एवेति सिद्धम् ॥ १० ॥

२. कर्मक्रमादिविरोधात् ज्योतिरादीनां कथं विष्णुवाचकत्वं इत्यतः

॥ ओं कल्पनोपदेशाच्च मध्वादिवदविरोधः ओं ॥ इति ।

यथावा 'असौ वा आदित्यो देवमधु' इत्यत्र मध्वादिपदार्थतया विष्णूपासनोपदेशो वर्तते । तथापि मध्वादिपदानां लौकिकमध्वादिवाचकत्वं उच्यते । एषां शब्दानामन्यत्र रूढिमनिवार्यैव विष्णौ महायोगवृत्तेरङ्गीकृतत्वात् । एवं ज्योतिरादिशब्दानामन्यत्ररूढिः, योगः, योगरूढी, रूढोपचारः, रूढलक्षणोपचारः, लक्षणा इति अङ्गीकृत्य महायोगेन महारूढियोगेन वा विष्णुवाचित्वमभ्युपगम्यते । तत्र अन्यत्र च प्रसिद्धानां शब्दानां महायोगः । निरतिशयप्रवृत्तिनिमित्तसद्भावात् । तदेकनिष्ठानां महारूढियोगः । अतः कर्मतदङ्गवाचकाः शब्दाः विष्ण्वेकनिष्ठाः इति सिद्धम् ॥ ११ ॥ अ० ॥ २ ॥



अत्र निखिलकर्मवाचकशब्दवाच्यत्वमहिमा विष्णोरुक्तः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ३. तृतीयं न संख्योपसंग्रहाधिकरणम् । सूत्रत्रयात्मकम् ।

ननु समन्वयादिति उक्तं सर्वशब्दवाच्यत्वं विष्णौ न संभवति । 'यस्मिन् पञ्चपञ्चजनाः आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' इति वाजसनेयके पञ्चजनादिशब्दाः विष्ण्वन्यपराः प्रतीयन्ते । तच्छब्दानां बहुत्ववाचित्वात् । 'एकमेवाद्वितीयम्' इति ईश्वरे बहुत्वस्य असंभवात् । बहुत्वे मानाभावाच्च । पुनरेते शब्दाः आधेयवाचकाः दृश्यन्ते । सर्वाधारतया विष्णुः तद्वाच्यः न कथमपि भवेत् । अतो पञ्चजनादिशब्दाः विष्ण्वन्यपराः इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ओं ॥ इति ।

यद्यपि ब्रह्म स्वगतभेदशून्यम् । तथापि नानारूपं तत् । अतो बहुसंख्योपसंग्रहस्य अविरोधः । नानारूपेण ब्रह्म शरीरान्तर्गताकाशप्राणादिपञ्चजनान् नियामयति । पञ्चजनाधारभूतं शरीरं च रूपान्तरेण ब्रह्म नियामयति । अतः आधाराधेयभावोऽपि ब्रह्मणो युज्यते । अतो विष्णुः सर्वशब्दवाच्यः ॥ १२ ॥

२. ननु कथं विष्णोः पञ्चजनशब्दवाच्यत्वम् ? इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं प्राणादयो वाक्यशेषात् ओं ॥ इति ।

एते पञ्चजनाः प्राणादीनां प्राणत्वादिप्रदाः । 'प्राणस्य प्राण' इति वाक्यशेषात् । 'यत् श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः चक्षुषश्चक्षुः' इति श्रुतेः । अतो पञ्चजनत्वं विष्णोरेव ॥ १३ ॥

३. वाक्यशेषे चतुर्णामेवोक्तिरित्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं ज्योतिषैकेषामसत्यन्ये ओं ॥ इति ।

वाक्यशेषे चतुर्णामेव नोक्तिः । माध्यन्दिनशाखायां पञ्चजनानाम् उक्तत्वात् । काण्वानां शाखायाम् अन्नस्यान्नत्वप्रदत्वेन किंचित् दूरे तत्रैव 'ज्योतिषां ज्योतिः' इत्यनेन वा पञ्चत्वं संभवति । अतो बहुत्ववाचकशब्दः विष्णुनिष्ठ एव ॥ १४ ॥ अ० ॥ ३ ॥

अत्र आधाराधेयशब्दवाच्यत्वसहितबहुत्ववाचकशब्दवाच्यत्वमहिमा विष्णोः उक्तः । तथा वेदवाक्यार्थग्रहणं तथैव वेदोत्पन्नज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ४. चतुर्थं कारणत्वाधिकरणम् । एकं सूत्रम् ।

सर्वशब्दवाच्यत्वं विष्णोरुक्तम् । तैत्तिरीये 'आत्मन आकाशः संभूतः आकाशाद्वायुः ....' इति श्रुताः आकाशादिशब्दाः न विष्णुपराः । आकाशादीनां आत्मादिकार्यत्वश्रुतेः । विष्णोस्तु कार्यत्वमयुक्तम् । 'न जायते म्रियते वा' इत्यादेः । विष्णोः स्वस्यैव कार्यकारणभावोऽपि अनुपपन्नः । सुतोत्पत्तौ जनके जातशब्दादर्शनात् । आकाशादिसंभवस्य



तदधीनत्वेऽपि संभूतशब्दः तत्र न वर्तते । अतो मुख्यकारणे विष्णौ अवान्तरकारणवाचकाः शब्दाः न वर्तन्ते इति प्राप्ते सिद्धान्तयत्सूत्रम् ।

॥ ओं कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ओं ॥ इति ।

कार्यत्वे सति कारणमवान्तरकारणम् । तच्छब्दवाच्योऽपि विष्णुरेव । 'य आकाशे तिष्ठन् यो वायौ तिष्ठन्' इति तस्य आकाशादिषु स्थितत्वात् । 'सयोतोऽश्रुतः' इति अश्रुत एव 'यमाकाशो न वेद' इत्यादिना व्यपदिष्टः । आकाशे अभिव्यक्तो भगवान् वायौ स्वरूपाभिव्यक्तिकारणमिति तस्य अवान्तरकारणत्वम् उपपन्नमिति अवान्तरकारणवाचकाः शब्दाः तन्निष्ठा एव ॥ १५ ॥ अ० ॥ ४ ॥

अत्र अवान्तरकारणत्वरूपमहिमा विष्णोरुक्तः । तथा वेदस्य व्याख्यानं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ५. पञ्चमं समाकर्षाधिकरणम् । सूत्राष्टकम् ।

१. तत्तु समन्वयादिति यदुक्तं विष्णोः लौकिकवैदिकसर्वशब्दवाच्यत्वं तन्न युक्तम् । अन्यत्र तेषां शब्दानां व्यवहाराभावप्रसंगात् । अवाचकैः व्यवहारे व्यवस्थानुपपत्तिः । अतः साक्षादपि अविरोधमित्ययुक्तम् । शरीररूपकविन्यस्तेत्यपि न साधु । लोके लक्षणेतरव्यावृत्त्यभावप्रसंगात् । 'कल्पनोपदेशात्' इत्युक्तमपि न युक्तम् । अन्यत्रापि मुख्यवृत्तेः संभवात् विष्णोः मुख्यवाच्यत्वाभावापातात् ।

अतः विष्णुः न सर्वशब्दवाच्य इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं समाकर्षात् ओं ॥ इति ।

सर्वे शब्दाः मुख्यवृत्त्या विष्णुवाचका एव । अन्यत्रव्यवहार-सिद्ध्यर्थं ततः समाकृष्य रूढ्यादिः कल्प्यते । अन्यत्र शब्दप्रवृत्ति-निमित्तमल्पम् । तदधीनत्वात् । 'परस्य वाचकाः शब्दाः समाकृष्ये-तरेष्वपि । व्यवह्रियन्ते सततं लोकवेदानुसारतः' इति पाद्मोक्तेः । पूर्वोक्तं सर्वं एतदभिप्रायकमेव ॥ १६ ॥

२. तर्हि अन्यत्र शब्दानां प्रसिद्धिः कथमित्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं जगद्वाचित्वात् ओं ॥ इति ।

जगत्येव व्यवहारः । अतः श्रोतॄणां तत्रैव व्युत्पत्तेः । विष्णौ तथा व्यवहाराभावात् न व्युत्पत्तिः लौकिकानाम् ॥ १७ ॥

३. अत्रैव आक्षेपान्तरस्य समाधानम् ।

॥ ओं जीवमुख्यप्राणलिंगादिति चेत्तद्व्याख्यातम् ओं ॥ इति ।

'अस्य यदेकां शाखां जीवो जहाति अथ सा शुष्यति' इति जीवाधीनत्वं 'वायुना हि सर्वे लोका नेनीयन्ते' इति वाय्वधीनत्वं श्रूयते । अतो तदधीनत्वलिङ्गेन विष्णोः सर्वशब्दवाच्यत्वं न सिद्ध्यति इति चेन्न । जीवमुख्यप्राणलिङ्गानां तदन्तर्गतविष्णुपरत्वस्योक्तत्वात् । 'यद्यद्वि-भूतिमत्.........तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्' इत्यादि स्मृतेश्च । अतः तल्लिङ्गवतोऽन्तर्यामिण एव मुख्यवाच्यत्वमिति सिद्धम् ॥ १८ ॥



४. समाकर्षस्य प्रयोजनाभावशङ्कापरिहारार्थं सूत्रम् ।

॥ ओं अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ओं ॥ इति ।

कर्मादिज्ञानमपि परमात्मज्ञानसाधनम् । अतो वेदः समाकर्षेण कर्मदेवतादि वदति इति जैमिनिः मन्यते । शौनकेन प्रश्ने कृते अङ्गिरसा सर्वम् अपरविद्यया विज्ञातं परविद्याविषयकपरमात्मज्ञाने सफलं भवति इति 'द्वे विद्ये वेदितव्ये' इति व्याख्यानात् । पुनः श्वेतकेतुना तं प्रकारं 'कथमहं जानीयाम्' इति प्रश्ने कृते उद्दालकेन यथा एकेन मृत्पिण्डेन ज्ञातेन ज्ञातमपि घटादि ज्ञातफलं भवति तथा इत्युक्तेः। इदमेके शाखिनः स्पष्टमेव पठन्ति । 'यस्तन्न वेद किमृचा करिष्यति' इति सर्वदेवाधारस्य तस्य ज्ञानार्थमेव कर्मादिकम् उच्यते इति भावः ॥१९॥

५. अन्यदनुक्त्वापि परमात्मज्ञानं संभवतीति आशङ्कां परि-हर्तुं सूत्रम् ।

॥ ओं वाक्यान्वयात् ओं ॥ इति ।

वाक्यान्वय इति विभिन्नार्थेषु वाचकतया स्थितस्य वाक्यस्य अन्ततो भगवत्परत्वम् । अन्यस्य वाच्यत्वेऽपि परमात्मनः वाक्यवाच्यत्वं युज्यते । वाक्यान्वयं विना पदान्वयेनैव उत्तमाधिकारिव्यतिरिक्तानां ज्ञानमसंभावितं भूत्वा जिज्ञासायां वैमुख्यं भवति । 'कश्छन्दसां योग-मावेद धीरः' इति श्रुतेः ॥ २० ॥

६. तत्प्रदर्शनाय सूत्रम् ।

॥ ओं प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ओं ॥ इति ।

'नान्यः पन्थाः अयनाय विद्यते' इति प्रतिज्ञासिद्ध्यर्थं श्रुतिः सपरिकरं कर्मादि वदति। तदनन्तरम् 'अमृतो वाव सोमपो भवति यावदिन्द्रः' इति तस्य दुःखसंभिन्नं विनाशिफलमुच्यते। ततः दुःखासंभिन्ननित्यसुखरूपस्य मोक्षस्य कर्माद्यसाध्यत्वं समर्थ्यते। 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणः' इत्यादेः इति आश्मरथ्यो मन्यते ॥२१॥

७. अत्रैव प्रकारान्तरं सूत्रम्।

॥ ओं उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ओं ॥ इति।

मोक्षार्थं ज्ञानमावश्यकम्। तत्साधनं कर्मादि। 'रोचनार्थं फलश्रुतिः' इति कर्मणः फलोक्तिरपि वर्तते। अतो वेदः ज्ञानार्थं कर्मादि वक्ति इति औडुलोमिः मन्यते ॥ २२ ॥

८. तत्रैव रीत्यन्तरं प्रतिपादयत्सूत्रम्।

॥ ओं अवस्थितेरिति काशकृत्स्नः ओं ॥ इति।

मोक्षार्थं ज्ञानं कर्मणा अन्तःशुद्ध्या भवति। परमात्मा च कर्मादिसर्वाधारत्वरूपेण ज्ञातव्यः इति काशकृत्स्नो मन्यते।

एवं व्यासमतैकदेशमन्ये आश्रयन्ति। अनेकाः अधिकारिणः। अतो भगवद्ज्ञानाद्यर्थं शब्दानामन्यत्र समाकर्षेण व्यवहारः इति सकलशब्दपरममुख्यार्थत्वं विष्णोः इति सिद्धम् ॥२३॥ अ० ॥५॥

अत्र मुख्यतः सर्वव्यवहारमुख्यविषयत्वरूपमहिमा विष्णोरुक्तः। तथा वेदस्य व्याख्यानं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धम् वेदमहत्त्वम्।



## ६. षष्ठं प्रकृत्यधिकरणम्। सूत्रपञ्चकम्।

१. सर्वशब्दवाच्यत्वमुक्तं विष्णोः। 'एष ह्येव प्रकृतिरविकृतिः' इति स्त्रीलिङ्गशब्दाः श्रूयन्ते। 'नैनं वाचा स्त्रियं ब्रुवन्' इति विष्णोः स्त्रीत्वनिषेधात्। वशीकृतभार्ये भर्तरि तद्दर्शनात् तदधीनत्वलिङ्गमपि नात्रोपयोगि इति न विष्णोः सर्वशब्दवाच्यत्वमिति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ओं प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ओं ॥ इति।

स्त्रीशब्दवाच्यश्च विष्णुरेव। 'हन्त एतमेव पुरुषं सर्वाणि नामानि अभिवदन्ति' इति प्रतिज्ञा। 'यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्ति' इति दृष्टान्तः। एतदनुपरोधात् विष्णुरेव प्रकृतिशब्दवाच्यः ॥ २४ ॥

२. तत्र युक्त्यन्तरं प्रतिपादयत् सूत्रम्।

॥ ओं अभिध्योपदेशाच्च ओं ॥ इति।

'प्रकृतिर्व्रीसनेत्येवं तवेच्छानन्त कथ्यते' इति स्मृतेः। तदभिध्यैव प्रकृतिशब्देनोच्यते। 'सोभिध्या सजूतिः सप्रज्ञा स आनन्दः' इति श्रुतेः अभिध्या विष्णुस्वरूपमेव। अतो विष्णुरेव प्रकृतिशब्दवाच्यः। श्रुतिस्मृत्योरनुशासनरूपत्वात् ॥ २५ ॥

३. इच्छार्थकायाः प्रकृतेः साक्षादीश्वरवाचकत्वं कथम्! इति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ओं साक्षाच्चोभयाम्नानात् ओं ॥ इति।

'एष स्त्री एष पुरुषः एष प्रकृतिः एष आत्मा' इति साक्षात् विष्णोः प्रकृतिपुरुषत्वोभयाम्नानात् ॥ २६ ॥

४. निमित्ताभावात् प्रकृतिशब्दवाच्यत्वं न युज्यत इति चेत् समादधत् सूत्रम् ।

॥ ओं आत्मकृतेः परिणामात् ओं ॥ इति ।

प्रकृष्टा कृतिः प्रकृतिः इति योगाख्यनिमित्तसत्वात् विष्णुः प्रकृतिः । 'अथ हैष आत्मा प्रकृतिमनुप्रविश्य आत्मानं बहुधा चकार तस्मात् प्रकृतिः' इति भाल्लवेयश्रुतिः । अनेन यत्परैः ब्रह्मणः प्रपंचोपादानत्वरूपपरिणामित्वमुच्यते तदप्रामाणिकम् ॥ २७ ॥

५. न ब्रह्मणः प्रकृत्यादिस्त्रीशब्दवाच्यत्वमित्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं योनिश्च हि गीयते ओं ॥ इति ।

स्वदेहादेवापत्यजनकत्वं स्त्रीत्वं 'यद्भूतयोनिम्' इत्युक्तस्य विष्णोः युज्यत एव । अतो विष्णुरेव समस्तस्त्रीलिङ्गशब्दमुख्यार्थः इति सिद्धम् ॥ २८ ॥ अ० ॥ ६ ॥

अत्र विष्णोः जगत्साक्षात्कारणत्वमहिमा उक्तः । तथा वेदस्य व्याख्यानं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धम् वेदमहत्वम् ॥

## ७. सप्तमम् एतेनाधिकरणम् । एकं सूत्रम् ।

सर्वशब्दाभिधेयत्वमुक्तं विष्णोः । तन्न युक्तम् । 'असद्वा इदमग्र आसीत्' इत्यादौ असदादिशब्दाश्श्रूयन्ते । एते निषेधमुखशब्दाः



न विधिरूपे विष्णौ सन्ति । स्वरूपशून्यस्य पराधीनतापि न संभवति इति समन्वयसूत्रं न युक्तमिति प्राप्ते सिद्धान्तयत्सूत्रम् ।

॥ ओं एतेन सर्वे व्याख्याता व्याख्याताः ओं ॥ इति ।

असदादिशब्दवाच्योऽपि विष्णुरेव । 'एष ह्येव शून्यः...तुच्छः ....अभावः... अव्यक्तः ... अचिन्त्यः निर्गुणश्च' इति महोपनिषदि । 'शमूनं कुरुते विष्णुः अदृश्यः सन् परः स्वयम् । तस्माच्छून्य इति प्रोक्तः' इति च । 'सर्वस्य तदधीनत्वात् तत्तच्छब्दाभिधेयता । अन्येषां व्यवहारार्थम् इष्यते व्यवहर्तृभिः' इति महाकौर्मे । एतेन तदधीनत्वादियुक्तिसमुदायेन निषेधमुखवेद्यत्वादीनामपि तत्प्रेरणामन्तरेण अनुपपन्नत्वात् तत्कारणं ब्रह्म स्वतन्त्रं सर्वशब्दवाच्यं च इति सिध्यति । विष्णोः स्वतन्त्रत्वात् असदादिशब्दवाच्यत्वेऽप्यदोषः । अत्र सर्वत्रोक्तस्य अवधारणार्थमेव द्विरुक्तिः । अतो हरेः अशेषस्वरवर्णपदवाक्यात्मकशास्त्रयोनित्वं, ततः मुख्यतः जगज्जन्मादिकर्तृत्वं मुख्यानन्तगुणत्वं च सिद्धम् ॥ २९ ॥ अ० ॥ ७ ॥

अत्र शास्त्रवेद्यत्वकारणत्वादिमहामहिम्ना निमित्तेन जिज्ञास्यत्वं परब्रह्मणो विष्णोः समर्थितम् । तथा वेदस्य व्याख्यानं तथैव वेदोत्पन्नज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

अत्र अध्याये १३५ सूत्राणि; ६० अधिकरणानि ।

एवं समन्वयाध्यायसूत्राणामर्थसंग्रहः ।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ॥

---

श्रीवेदव्यासाय नमः। श्रीगुरुभ्यो नमः। हरिः ॐ।

# ब्रह्मसूत्राधिकरणार्थसंग्रहः

## प्रथमाध्याये चतुर्थः पादः

आद्ये चतुर्थपादेऽस्मिन् अन्यत्रैव प्रसिद्धिगाः।
शब्दाः समन्विता विष्णौ हेतुस्तत्र स्वतन्त्रता ॥ १ ॥
१ अव्यक्ताद्यात्ममेवाहुः तदुक्तास्तद्वशा यतः।
२ शब्दाः कर्मपरा विष्णौ महायोगाख्यवृत्तितः ॥ २ ॥
३ शब्दाः पञ्चजनाद्यास्तु विष्णौ रूपबहुत्वतः।
४ अवान्तरं च कारणं तत्तन्निष्ठो हरिश्श्रुतः ॥ ३ ॥
५ वैदिका लौकिकाश्शब्दा विष्णुनिष्ठास्समाहृताः।
अन्यत्रव्यवहारार्थं स्युर्विष्णुज्ञानसिद्धये ॥ ४ ॥
६ विष्णौ स्त्रीलिङ्गशब्दास्स्युः साक्षाज्जन्मादिकारणे।
७ निषेधमुखशब्दाश्च तत्रैव प्रेरकत्वतः ॥ ५ ॥
सर्वशब्दाभिधेयोऽसौ शास्त्रगम्यत्वतो हरिः।
प्रभवः सर्वभावानां जिज्ञास्यास्य प्रसादतः ॥ ६ ॥

आद्ये चतुर्थपादेऽस्मिन् नयानामर्थसंग्रहः।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ॥

ॐ तत्सत्

श्रीवेदव्यासाय नमः। श्रीगुरुभ्यो नमः। हरिः ॐ।

# अथ ब्रह्मसूत्रार्थसंग्रहे द्वितीयोऽध्यायः

प्रथमाध्याये अशेषशास्त्रप्रामाण्येन विष्णुरेव जगज्जन्मादिकर्तेति सिद्धान्तितः। तत्र युक्त्यादिविरोधाभावं दर्शयति अनेनाध्यायेन सूत्रकारः।

## प्रथमः पादः

### १. प्रथमं स्मृत्यधिकरणम्। सूत्रत्रयात्मकम्।

१. विरोधश्चतुर्विधः। युक्तिविरोधः, समयविरोधः, श्रुतिविरोधः, न्यायोपेतश्रुतिविरोधश्चेति। अत्र पादे युक्तिविरोधं परिहरति। प्रथमाध्याये जगज्जन्मादिकर्तृत्वमुक्तं विष्णोः। तच्च पाशुपतादिस्मृतिसिद्धयुक्तिविरुद्धम्। विरोधं प्रदर्श्य तं परिहरत् सूत्रम्।

॥ ओं स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्न अन्यस्मृत्यनवकाशदोषप्रसङ्गात् ओं ॥ इति।

'यतो वा' इत्यादि श्रुतिप्रमाणेन विष्णोः जगत्कर्तृत्वम् उक्तम्। पाशुपतादिस्मृतिषु तेनैव प्रमाणेन रुद्रादेः कारणत्वमुच्यते। स्मृतिकर्तारः सर्वज्ञाः आप्ताश्च रुद्रादयः। तेषां प्रत्यक्षमेव तत्तत्स्मृतिमूलम्। अतः स्मृतिश्रुत्योः स्मृतेरेव प्राबल्यात् तद्विरुद्धा श्रुतिः अप्रमाणं भवति। तथा च श्रुतिप्रमाणेन विष्णोः जगत्कारणत्वं न सिध्यति इति प्राप्ते सूत्रस्य परिहारांशेन सिद्धान्तः क्रियते।

श्रुतिः सर्वज्ञतमैः विष्ण्वादिभिः प्रणीतानां पञ्चरात्रादिस्मृतीनाम् अनुकूला प्रबलतरा सती पाशुपतादिस्मृतीः बाधते । इमाः वैष्णवस्मृतयः जगद्धितोपदेष्टृभिः प्रणीताः श्रुतिसंवादेन बलवत्यः । न तथा पाशुपतादयः । अतो न ताः रुद्रादिकारणत्वं साधयन्ति । पुरुषोत्तमादिभिः प्रणीताभिर्वैष्णवस्मृतिभिस्तु विष्णोः जगत्कारणत्वं जिज्ञास्यत्वं च निर्बाधं सिद्ध्यति इति भावः ॥ १ ॥

२. पाशुपतादीनामप्याप्तोक्तत्वात् प्रामाण्यमिति प्राप्ते समादधत् सूत्रम् ।

॥ ओं इतरेषां चानुपलब्धेः ओं ॥ इति ।

तासु स्मृतिषूक्तानाम् अदृष्टादितरेषां फलानाम् अनर्थानां च तदुक्तानुष्ठानपरित्यागयोः कृतयोरपि प्रत्यक्षतः अनुपलब्धेः तासाम् आप्तोक्तत्वनिश्चयं कर्तुं न शक्यते । सौत्रश्चशब्दः भागेनोपलब्धिसूचकः । तथापि भागान्तरवत् तस्य आप्तोक्तत्वाभावनिश्चयः क्रियते इत्यर्थः ॥ २ ॥

३. तथापि योगस्मृत्युक्तफलादीनाम् उपलम्भात् तस्याः आप्तोक्तत्वनिश्चय इति प्राप्ते समादधत् सूत्रम् ।

॥ ओं एतेन योगः प्रत्युक्तः ओं ॥ इति ।

योगस्मृत्युक्तानां स्वेदनगात्रभञ्जनादीनां प्रत्यक्षोपलब्धिः यद्यपि वर्तते । तथापि प्रथमं स्वेदनं द्वितीयं गात्रभञ्जनम् इत्याद्युक्ताभ्यासोत्कर्षसंपत्तिकाल एव स्वेदनादयोऽदृष्टाः । अतः तासां स्मृतीनां आप्तोक्तत्वनिश्चयः न शक्यते । अतः ( अवैदिकानां ) वेदविसंवादिनां स्मृतीनाम्



अप्रमाणत्वात् तद्विरोधः विष्णोः जगत्कारणत्वस्य न सम्भवति ॥ ३ ॥

अ० ॥ १ ॥

अत्र अवैदिकैरज्ञेयत्वमहिमा विष्णोरुक्तम् । तथा वेदस्य व्याख्यानं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ।

## २. द्वितीयं न विलक्षणत्वाधिकरणम् । सूत्रद्वयात्मकम् ।

कारीर्याद्यनुष्ठानेऽपि वृष्ट्यादेरदृष्टत्वात् श्रुतेरपि प्रामाण्यानिश्चय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं न विलक्षणत्वादस्य तथात्वं च शब्दात् ओं ॥ इति ।

श्रुतेः पाशुपतादितः वैलक्षण्यं वर्तते । तस्याः नित्यत्वात् । वैष्णवस्मृतेश्च श्रुत्यनुसारित्वात् प्रामाण्यम् । श्रुतिप्रामाण्यस्य स्वतस्त्वात् आप्तोक्तत्वनिमित्तकप्रामाण्यवत्पाशुपतादिवैलक्षण्यं च श्रुतेः । श्रुतिप्रामाण्यस्य संवादनिरपेक्षतज्ज्ञानादेव सिद्धिः । 'वाचा विरूपनित्यया' इत्यादिश्रुतेः ' अनादि निधना नित्या ' इत्यादि स्मृतेश्च । ' न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदाह्येवैनं वेदयन्ति ' इति भाल्लवेयश्रुतेश्च । एवमत्र श्रुतिस्मृतिवाक्यबलेन चक्षुरादि न परमात्मप्रमापकमित्युक्त्वा वेद एव तत्प्रमापक इति दर्शयित्वा वेदस्य च नित्यत्वमुपपाद्य सः संवादानपेक्ष एव प्रमाणमिति सिद्धान्तितम् । अनेन अत्र सूत्रे वेदस्यापि अप्रामाण्यं स्यात् इति आपादनं निराक्रियते । वेदप्रामाण्ये युक्तिरपि उच्यते ॥ ४ ॥

२. उक्तस्य फलविसंवादरूपस्य दोषस्य वेदेऽपि प्रतीयते इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं दृश्यते तु ओं ॥ इति ।

योग्यानां कर्तृणां फलं दृष्टमेव । वेदो निर्दोषः स्वतःप्रमाणं च । अतः फलविसंवादस्तत्र नास्त्येव । क्वचित् दृष्टस्य गत्यन्तरं कल्पनीयम् । न तथा पाशुपतादिविषये । तासां फलदर्शनमन्तरेण प्रामाण्यासिद्धेः । अत्र कारीर्यादिकर्तृत्वं नाम तत्फलयोग्यत्वं कर्मवैगुण्यप्रतिबन्धादि-शून्यत्वं वा । अतः वेदतदनुकूलस्मृतेश्च युक्तिविरुद्धत्वाभावात् तत्सिद्धं विष्णोः जन्मादिकारणत्वं युक्तमेवेति सिद्धम् ॥ ५ ॥ अ० ॥ २ ॥

अत्र युक्त्यविरुद्धवेदैकसिद्धजन्मादिकारणत्वं विष्णोर्महिमा उक्तः । तथा वेदस्य व्याख्यानं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

### ६· तृतीयम् अभिमान्यधिकरणम् । सूत्रद्वयात्मकम् ।

१. वेदस्य प्रामाण्ये एव तस्य फलविसंवादस्थले गतिचिन्ता । तस्य प्रामाण्यमेव दुर्लभम् । 'मृदब्रवीत्' इत्यादि वेदवाक्यं 'मृत् न वक्ति जडत्वात्' इत्यादि युक्तिविरुद्धं स्वयमप्रमाणं सत् तद् दृष्टान्तेन तदन्यत्रेवदवाक्यानामप्रामाण्यं साधयति इति प्राप्ते सिद्धान्तमव सूत्रम् ।

॥ ओं अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ओं ॥ इति ।

अत्र श्रुतिवाक्ये मृदाद्येव नोच्यते । मृदाद्यभिमानिदेवतानां



तत्र व्यपदेशात् । तासामितरेभ्यो विशिष्टं सामर्थ्यं सर्वत्रानुगतिश्च वर्तते । तासां च चेतनत्वात् वचनकर्तृत्वं युज्यत एवेति न वेदवाक्यस्य युक्तिविरोधः ॥ ६ ॥

२. अप्रामाणिकदेवताकल्पनातो वेदस्य अप्रामाण्यकल्पनं वरम् इत्यतः सूत्रम् ।

॥ ओं दृश्यते च ओं ॥ इति ।

देवताः प्रामाणिकाः । तासां महद्भिः दृश्यमानत्वात् । उक्तं च भविष्यत्पुराणे । 'पृथिव्याद्यभिमानिन्यः देवताः प्रथितौजसः । अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः । ताश्च सर्वगता नित्यं वासुदेवैकसंश्रया' इति । अतः वेदप्रामाण्ये न युक्तिविरोधः । वेदेन च विष्णोः जगत्कारणत्वसिद्धिः ॥ ७ ॥ अ० ॥ ३ ॥

अत्र सर्वांशेपि युक्त्यविरुद्धवेदसिद्धजन्मादिकारणत्वं विष्णोः महिमा उक्तः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

### ४· चतुर्थम् असदधिकरणम् । सूत्रषट्कम् ।

१. जन्माद्यस्येति विष्णोः कारणत्वमुक्तम् । तन्न युक्तम् । 'असदेवेदमग्र आसीत्' इति श्रुत्या असतोपि कारणत्वश्रवणात् । अत्र असदिति प्रलयवृत्तिविश्वप्रागभाव उच्यते इति प्राप्ते सिद्धान्तयत्सूत्रम् ।

॥ ओं असदिति चेन्न प्रतिषेधमात्रत्वात् ओं ॥ इति ।

विष्णोः जगत्कारणत्वमेव युक्तम् । असतः न युक्तम् । तस्य

अभावधर्मात्मतामन्तरेण स्वरूपत एव प्रतिषेधमात्रत्वात्। प्रागभावः अत्यन्ताभावो वा यत्किञ्चित्प्रति कारणं न हि भवति।

अत्र कारणत्वेनाभिमतमसत् श्रुतिप्राप्तमेव। श्रुतिवाक्यं च असतः कारणत्वं प्रलयस्थितत्वं च उच्यमानं विष्णोः जगत्कारणत्वप्रतिपादकश्रुतिविरुद्धं भवतीति विरोधोऽत्र निराकार्य एव। युक्तिविरोधोऽप्यत्र वर्तते। 'कारणं प्रलये असत् वस्तुत्वात् कार्यवत्' इति। अयमपि निराकार्यः। एतद्विरोधद्वयस्यात्र श्रुतिमूलत्वेन श्रुतिविरोधपरिहारद्वारा युक्तिविरोधोऽपि परिह्रियते। विरोधपरिहारे तु श्रुतिरर्थान्तरे प्रमाणं भवति श्रुतेस्स्वतः प्रामाण्यात् ॥ ८ ॥

२. श्रुतिबलात् कस्यचिदसतः कारणत्वाङ्गीकारे किं बाधकम्! इति प्राप्ते समादधत् सूत्रम्।

॥ ओं अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ओं ॥ इति।

असतः कारणत्वे प्रलये सर्वासत्वमेव स्यात्। असमञ्जसम् असन्मतम् ॥ ९ ॥

३. नानिष्टमेतदित्युक्तौ तत् परिहरत् सूत्रम्।

॥ ओं न तु दृष्टान्तभावात् ओं ॥ इति।

प्रलये सर्वासत्वं न युज्यते। दृष्टान्तबलेन तदा सत एव पदार्थस्य साधयितुं शक्यत्वात्। 'जगदुत्पत्तिः सत एव भवति, उत्पत्तित्वात्, घटोत्पत्तिवत्' इति। 'जगद्विनाशः सशेषः विनाशत्वात् घटविनाशवत्' इति। एवं प्रलये पदार्थसत्वमेव सिध्यति ॥ १० ॥



४. न केवलमसन्मतं प्रमाणविरुद्धम् अप्रामाणिकं च इति प्रतिपादयत् सूत्रम्।

॥ ओं स्वपक्षदोषाच्च ओं ॥ इति।

प्रलये सर्वासत्वे न प्रत्यक्षं नाप्यागमः। दृष्टान्ताभावेन तत्र प्रसक्तमनुमानमपि दुष्टं भवत्येव ॥ ११ ॥

५. तर्केण साधनबाधनमयुक्तमिति प्राप्ते समादधत् सूत्रम्।

॥ ओं तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ओं ॥ इति।

यत्तर्केण साध्यते तदन्यथापि प्रतितर्केण साधयितुं शक्यते इति चेत् न। प्रामाणिकतर्कस्य प्रतितर्कापराहतत्वात्। तथा हि। यः प्रामाणिकमपि तर्कं निराकरोति स मोक्षमङ्गीकरोति न वा। यद्यङ्गीकरोति तर्हि मोक्षस्य शास्त्रमन्तरेण असिद्धेः शास्त्रमङ्गीकार्यम्। यदि नाङ्गीकरोति तर्हि परं प्रति तर्केणैव मोक्षाभावः साध्यः। तेन आगमप्रामाण्यानङ्गीकारात्। स्वस्यापि केवलागमेनैव विप्रतिपन्नविषये निश्चयाभावात्। फलतः तर्काङ्गीकारे अनिर्मोक्ष एव। एवं च प्रामाणिकः तर्कः साधने बाधने वा क्षम एव। अप्रामाणिकस्तु प्रामाणिकेन बाध्यते। प्रकृते प्रलये पदार्थसत्वसाधकः तर्कः प्रामाणिकः। स उक्तरीत्या अप्रामाणिकम् असत्वसाधकेनाभिमतं तर्कं निराकरोत्येव।

६. तथापि न विष्णोः जगत्कारणत्वम्। 'अकस्माद्धीदमाविरासीत्....' 'प्रधानादिदमुत्पन्नम्' 'जीवाद्भवन्ति भूतानि' इत्यादिना

अकारणत्वजीवकारणत्वादिप्रतीतेः इत्यतः विरोधमपाकुर्वत् सूत्रम् ।

॥ ओं एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ओं ॥ इति ।

सत्कारणत्वे दृष्टान्तो वर्तते । असत्कारणत्वे च न । एतेन निष्कारणत्वे दृष्टान्ताभावः । जीवकर्तृत्वेऽपि दुःखादिषु जीवस्य कर्तृत्वाभावेन दृष्टान्ताभावः । अचेतनकर्तृत्वेऽपि दृष्टान्ताभावः वर्तत एव । श्रुत्युक्तानामसदादिपदानां ब्रह्मवाचकत्वाङ्गीकारात् नात्र श्रुतिविरोधः । यत्र अमुख्यतया अन्यवाचकत्वे अविरोधः तत्र अमुख्यार्थस्वीकारे न बाधकम् । यत्र विरोधः तत्र ब्रह्मैवार्थः । इति श्रुतिगतिव्यवस्था ।

अतः विरुद्धयुक्तीनामाभासत्वात् जगज्जन्मादिकारणत्वं ब्रह्मणो लक्षणम् इति सिद्धम् ॥ २२ ॥ अ० ॥ ४ ॥

अत्र सर्वथा युक्त्यविरुद्धजन्मादिकारणत्वं भगवन्महिमा उच्यते । तथा वेदस्य प्रतिपादनं तथैव वेदोत्पन्नज्ञानस्य मुक्तिहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

### ५. पञ्चमं भोक्त्रधिकरणम् । एकं सूत्रम् ।

॥ ओं भोक्त्रापत्तेरविभागश्चेत् स्यात् लोकवत् ओं ॥ इति ।

विष्णोर्जगत्कर्तृत्वमसंभावितम् । तस्य जीवाभिन्नत्वात् । 'कर्माणि विज्ञानमयश्च आत्मा' इति मुक्तजीवस्य परमात्मत्वप्राप्तिः श्रूयते इति सूत्रोक्त एव पूर्वःपक्षः 'भोक्त्रापत्तेः अविभागश्चेत्' इति । न इत्यध्याहारः । 'स्यात्' इति परिहारः । ऐक्योक्तिः नाभेदनियामिका ।



एकीभूतत्वेनोक्तजले अन्तर्भेदस्यैव सत्वात् । 'निरञ्जनः परमं साम्यमुपैति' 'परात्परं पुरुषमुपैति' इत्यादिसन्निहितवाक्यविरोधाच्च । 'हरौ नियतचित्तत्वात् ग्रहवत् तत्प्रवेशनात् । मोक्षं तादात्म्यमित्याहुः न तु तद्रूपतः क्वचित्' इति स्कान्दवचनात् । अतः विष्णोः जगत्कारणत्वमविरुद्धमेव इति स्थितम् ॥ १४ ॥ अ० ॥ ५ ॥

अत्र विष्णोः मुक्तावपि जीववैलक्षण्यरूपमहिमा उक्तः । तथा जीवात् अन्तर्भेदसमर्थनं तथैव वेदोत्पन्नज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

### ६. षष्ठं तदनन्यत्वाधिकरणम् । सूत्रसप्तकम् ।

१. विष्णोः जगत्कारणत्वं न युक्तम् । तस्य स्वतन्त्रकारणसापेक्षत्वात् । लोकवत् । अत एव न तस्य सर्वगुणपूर्णत्वम् इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं तदनन्यत्वमारम्भणशब्दादिभ्यः ओं ॥ इति ।

घटादिसृष्टिदृष्टान्तेन ब्रह्मणः स्वतन्त्रसाधनसापेक्षत्वं न कल्प्यम् । स्वरूपसामर्थ्यादेव तस्य सृष्टिः । 'किंस्विदासीत् अधिष्ठानं आरम्भणं कतमत्स्वित् कथासीत्' इत्याक्षिप्य श्रुतौ अधिष्ठानाद्यनुक्तेः । अपरतन्त्रत्वात् स्वतन्त्रत्वात् साधनसत्ताप्रदत्वात् ब्रह्म स्वतन्त्रसाधनादनन्यम् इति 'परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते । साधनानां साधनत्वं यतः किं तस्य साधनैः' इति प्रमाणेनावगम्यते ॥ १५ ॥

२. तत्रैव युक्त्यन्तरं प्रतिपादयत सूत्रम् ।

॥ ओं भावेचोपलब्धेः ओं ॥ इति ।

यदि विष्णोः सृष्टौ तदतिरिक्तं स्वतन्त्रसाधनमस्ति तर्हि प्रमाणैः तदुपलभ्येत । तन्नोपलभ्यते । अतः नास्ति । 'अनुक्तं पञ्चभिर्वेदैः न वस्त्वस्ति कुतश्चन । अतो वेदत्वमेतेषां यतस्ते सर्ववेदकाः' इति स्कान्दवचनात् ॥ १६ ॥

३. 'अब्भ्यः संभूतः' इति 'प्रकृतिं स्वामधिष्ठाय' इति च साधनान्तरं प्रतीयते इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं सत्वाच्च अवरस्य ओं ॥ इति ।

अत्र भगवदधीनमेव साधनं प्रतीयते । 'काल आसीत् पुरुष आसीत् परम आसीत् यद्यदासीत तदधीनमासीत् तदावृतमासीत्' इत्यादिकाषायणश्रुतेः ॥ १७ ॥

४. उक्तमाक्षिप्य समादधत् सूत्रम् ।

॥ ओं असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ओं ॥ इति ।

प्रलये विद्यमानं साधनान्तरं पराधीनमिति न युक्तम् । 'नासदासीत्' इति श्रुतौ तस्य असत्वव्यपदेशात् । अतः प्रलये ब्रह्मैव आसीत् इति प्राप्ते परिहारस्तूच्यते ।

प्रलये साधनानां स्वरूपसत्वव्यपेक्षया नासत्वव्यपदेशः । तेषाम् अव्यक्तत्व–परतन्त्रत्व–अधमत्व–विकृतत्वरूप–विनाशादिरूप–धर्मान्तरापेक्षया असत्वव्यपदेशः । वाक्यशेषे प्रकृत्यादि सत्वश्रवणात् ॥ १८ ॥



५. साधनान्तराभाव एव कथ्यताम् । ईश्वरस्य महिमाधिक्यलाभात् इति प्राप्ते समादधत् सूत्रम् ।

॥ ओं युक्तेः शब्दान्तराच्च ओं ॥ इति ।

निरपेक्षतया स्रष्टृत्वम् उभयपक्षेऽपि महिमोत्कर्षसाधकम् । तथापि सोपस्करस्य तस्य स्रष्टृत्वे अधिकोत्कर्षलाभो वर्तते । 'अब्भ्यः संभूतः' इत्यादौ तथा प्रतीतेः ॥ १९ ॥

६. साधनसद्भावस्य युक्तिसिद्धत्वाच्च तत्र आग्रहः इति प्रतिपादयत् सूत्रम् ।

॥ ओं पटवच्च ओं ॥ इति ।

विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तसाधनसाध्या सृष्टित्वात् पटसृष्टिवत् इत्यर्थः ॥ २० ॥

७. तर्हि स्वतन्त्रसाधनसापेक्षत्वमेवायातमिति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं यथा प्राणादिः ओं ॥ इति ।

न तत्साधनं स्वतन्त्रम् । 'यः प्राणे तिष्ठन्' इत्यादिना ईश्वरेण स्वरूपसत्तादानरूपप्रेरणार्थं सर्वत्र अनुप्रविष्टत्वात् । अतः विष्णोः स्वतन्त्रत्वात् सर्वकर्तृत्वात् गुणपूर्णत्वमिति सिद्धम् ॥ २१ ॥ अ० ॥ ६ ॥

अत्र सर्वानुप्रवेशरूपसर्वकर्तृत्वाख्यमहामहिमा विष्णोरुच्यते । तथा सर्वत्र वेदवाक्ये प्रतिपादनं तद्रूपेणैव वेदोत्पन्नज्ञानस्य मोक्षसाधनत्वं च अर्थात् सिद्धं वेदमहत्वम् ॥

**७. सप्तमम् इतरव्यपदेशाधिकरणम् । सूत्रषट्कम् ।**

१. विष्णोः कर्तृत्वमुक्तम् । तच्च जीवस्य श्रूयते 'जीवाद्भवन्ति भूतानि' इति । जीवस्यैव कर्तृत्वं युक्तम् । अनुभवसिद्धत्वात् । अनुभवस्य बाधकाभावात् । तस्य जीवकर्तृत्वस्य ईश्वरप्रेरितत्वकल्पनं लाघवतर्कविरुद्धम् । जीवस्यैव स्वतन्त्रकर्तृत्वाङ्गीकारे जगतोऽपि तत्कृतत्वसिद्धिः । अतः कर्तुः ईश्वरस्यैवाभावात् जीवकर्तृत्वश्रुतेः ईश्वरविषयत्वकल्पनं विरुद्धम् । अतः जन्मादिकर्तृत्वं ब्रह्मलक्षणमसंभवि इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ओं इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ओं ॥ इति ।

यदि जीवस्य स्वतन्त्रकर्तृत्वं तर्हि तस्य हिताकरणम् अहितकरणं च न स्यात् । अतोऽसौ न स्वतन्त्रकर्ता । किंतु परमात्मैव इति भावः ॥ २२ ॥

२. ब्रह्मणोऽपि श्रमादिदोषनियमात् तस्यापि कर्तृत्वं न स्यात् इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं अधिकं तु भेदनिर्देशात् ओं ॥ इति ।

श्रुतिषु ब्रह्मणः अखिलश्रोतृत्वान्तर्यामित्वाशनायाद्यतीतत्वाद्यतिशयस्य निर्देशात् । 'श्रोता मन्ता,' 'एष ते आत्मा सर्वान्तरः' 'योऽशनाया पिपासे ... अत्येति' इत्यादिश्रुतेः । अतस्तत्र दोषसंभावनापि न विद्यते ॥ २३ ॥

३. तथापि जीवः अन्यनिरपेक्षतया कर्ता चेतनत्वात् ईश्वरवत्



इति किं न स्यात् इत्याशङ्कां समादधत् सूत्रम् ।

॥ ओं अश्मादिवच्च तदनुपपत्तिः ओं ॥ इति ।

अश्मादिदृष्टान्तेन जीवस्य अस्वतन्त्रत्वात् कर्तृत्वाभावोऽपि साधयितुं शक्यः । चेतनत्वमप्रयोजकम् ॥ २४ ॥

४. उक्तमाक्षिप्य समादधत् सूत्रम् ।

॥ ओं उपसंहारदर्शनान्नेति चेत् क्षीरवद्धि ओं ॥ इति ।

जीवस्य स्वतः कर्तृत्वं विद्यते । तस्य आरब्धान्तगामित्वात् इति चेत् न । यथा गोषु दृश्यमानं क्षीरं प्राणाधीनं तथा तत्र जीवे दृष्टस्यान्तगामित्वस्य ईश्वराधीनत्वात् । 'य आत्मानमन्तरो यमयति' इत्यादिश्रुतेः ॥ २५ ॥

५. ईश्वरस्य अनुपलब्धेः अभावात् जीव एव कर्ता इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ओं देवादिवदपि लोके ओं ॥ इति ।

यथा देवादीनामदृश्यत्वशक्तिमत्वात् युक्ता तेषामनुपलब्धिः तथा ईश्वरस्यापि । अतः अश्रुतजीवकर्तृत्वकल्पने एव गौरवम् । एवं च केवलयुक्तयो नार्थसाधिकाः । वाक्यानां परस्परविरोध एव युक्तयः अर्थसाधिकाः इति भावः ॥ २६ ॥

६. जीवस्य स्वतः कर्तृत्वं निराकुर्वद्युक्त्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ओं कृत्स्नप्रसक्तिः निरवयवत्वशब्दकोपो वा ओं ॥ इति ।

जीवस्य कर्तृत्वे एकेनांगुलिमात्रेण तृणादानादावपि पूर्णशक्त्या

प्रवृत्तिप्रसक्तेः। सांशत्वाङ्गीकारे अथेति निरवयवत्वश्रुतिव्याकोपात्। 'अथ स जीवः स नित्यो निरवयवो ....' इति श्रुतेः। अतः तस्य कर्तृत्वानुपपत्तेः विष्णोरेव जन्मादिकर्तृत्वं युक्तमेव इति सिद्धम् ॥२७॥ अ० ॥ ७ ॥

अत्र तदेकनिष्ठकर्तृत्वं विष्णोर्महिमा उक्तः। वेदस्य तत्कर्तृत्वपरत्वं तेन तज्ज्ञानस्य मोक्षहेतुत्वमर्थात् सिद्धं वेदमहत्वम् ॥

## ८. अष्टमं श्रुत्यधिकरणम्। सूत्रपञ्चकम्।

१. जीवपक्षोक्तदोषाः कृत्स्न प्रसक्त्यादयः ईश्वरपक्षेऽपि समानाः इति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ओं श्रुतेस्तु शब्दमूलत्वात् ओं ॥ इति।

ईश्वरकर्तृत्वे युक्तिविरोधः नैव संभवति। 'योऽसौ अविरुद्धः' इत्यादिश्रुतेः विरुद्धधर्माणां ईश्वरे अविरुद्धतया अवस्थानोक्तेः। तस्य शब्दैकसमधिगम्यत्वात् न युक्तिविरोधः ॥ २८ ॥

२. जीव एव युक्तिविरोधः नेश्वरे इति समर्थयत् सूत्रम्।

॥ ओं आत्मनि चैवं विचित्राश्च हि ओं ॥ इति।

ईश्वरे विचित्रशक्तिसद्भावात् तस्याः युक्तिविरोधनिरासकत्वात् तत्र न युक्तिविरोधः। 'विचित्रशक्तिः पुरुषः' इति 'अचिन्त्याः खलु ये भावाः न तांस्तर्केण योजयेत्' इत्यादिश्रुतिस्मृतयः ॥ २९ ॥

३. जीवेऽपि चेतनत्वात् अविरोधता किं ननीयते इत्याशङ्कां परिहरत् सूत्रम्।



॥ ॐ स्वपक्षदोषाच्च ॐ ॥ इति।

भगवदितरत्र प्रतीता दोषाः दोषा एव। भगवतश्च निर्दोषत्वेन श्रुतिसिद्धत्वात् अचिन्त्यशक्त्यादिना गुणा एव कल्प्याः, न दोषाः। 'अथ यः सदोषः .... स जीवः' 'यः निर्दोषः ... परः परमात्मा' इति काषायणश्रुतेः ॥ ३० ॥

४. ईश्वरस्य विचित्रशक्तिलोपशङ्कां व्यावर्तयत् सूत्रम्।

॥ ॐ सर्वोपेता च तद्दर्शनात् ॐ ॥ इति।

ईश्वरः सर्वविषये सर्वदाविद्यमानविचित्रशक्तिः। तथा श्रुतेः। 'सर्वैर्युक्ता शक्तिभिः देवता सा परेति यां प्राहुरजस्रशक्तिम्। नित्यानन्दा नित्यरूपाऽजरा च या शाश्वतात्मेति च यां वदन्ती' इति चतुर्वेदशिखायाम्। अतः सर्वशक्तिश्च ॥ ३१ ॥

५. विष्णोः कर्तृत्वमाक्षिप्य समादधत् सूत्रम्।

॥ ॐ विकरणत्वान्नेति चेत् तदुक्तम् ॐ ॥ इति ॥

'अपाणिपाद' इति श्रुतौ ईश्वरस्य अकरणत्वश्रवणात् न तस्य कर्तृत्वम् इति प्राप्ते तदुक्तम् इति परिहारः। पाण्यादिरहितः न कर्ता इति प्राकृतविषयः। ईश्वरस्तु सर्वोत्तमत्वेन परमशक्तित्वेन च कर्ता इति उपपादितः। इति विष्णोः सर्वकारणत्वात् युक्तं लक्षणसूत्रमिति सिद्धम् ॥ ३२ ॥ अ० ॥ ८ ॥

अत्र विष्णोः विचित्रशक्तिसर्वशक्तिरूपमहिमा उक्तः। तथा वेदस्य सर्ववाक्यारूढमुपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

**९. नवमं न प्रयोजनवत्त्वाधिकरणम् । सूत्रद्वयात्मकम् ।**

१. जगत्कर्तुः विष्णोः पूर्णत्वे सृष्ट्या न प्रयोजनम् । अपूर्णत्वे अकर्तृत्वमिति प्राप्ते—

॥ ॐ न प्रयोजनवत्त्वात् ॐ ॥ इति ।

तस्य पूर्णानन्दत्वात् आप्तकामत्वाच्च फलानुद्देशेन कर्तृत्वाभ्युपगमात् इत्यर्थः ॥ ३३ ॥

२. ॥ ॐ लोकवत्तु लीलाकैवल्यम् ॐ ॥ इति ।

ईश्वरप्रवृत्तेः केवललीलात्वं मत्तादिलीलोदाहरणेन आनन्दोद्रेकादथैवेति स्थापितम् । पूर्णानन्दो विष्णुः लोकानुग्रहाय सृष्ट्यादिक्रीडां करोतीति भावः । अतः विष्णोः कारणत्वं युक्तमिति सिद्धम् ॥ ३४ ॥ अ० ॥ ९ ॥

अत्र आनन्दोद्रेकात् सृष्टिकर्तृत्वं महिमा विष्णोरुक्तम् । वेदस्य प्रतिवाक्यं तथा उपपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

**१०. दशमं वैषम्यनैर्घृण्याधिकरणम् । सूत्रत्रयात्मकम् ।**

१. विष्णोः निर्निमित्तं प्राणिनां फलदानात् वैषम्यादीति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॐ ॥ इति ।

तस्य कर्मापेक्षया फलदातृत्वात् न वैषम्यादि । 'पुण्येन पुण्यं लोकं नयति पापेन पापम्' इति हि श्रुतिः ॥ ३५ ॥

२. ॥ ॐ न कर्माविभागादिति चेन्न अनादित्वात् ॐ ॥ इति ।



कर्मणो भगवदधीनत्वात् कथं कर्मापेक्षया फलदानमिति चेन्न । अनादित्वात् कर्मपरंपरायाः ॥ ३६ ॥

३. तर्हि ईश्वरस्य अस्वातन्त्र्यमिति प्राप्ते समाधानम् ।

॥ ॐ उपपद्यते चाप्युपलभ्यते च ॐ ॥ इति ।

ईश्वरस्य नास्वातन्त्र्यम् । अपेक्ष्यकर्मसत्त्वादेः स्वाधीनत्वात् । 'द्रव्यं कर्म च' इति श्रुतेः । स्वाधीनकर्मापेक्षा न दोषायेति श्रुतिसिद्धा । 'स कारयेत् पुण्यमथापि पापं न तावता दोषवानीशितापि । ईशो यतो गुणदोषादिसत्त्वे' इति चतुर्वेदशिखायाम् । अतः विरोधाभावात् विष्णुः सर्वकर्तेति सिद्धम् ॥ ३७ ॥ अ० ॥ १० ॥

अत्र वैषम्यादिदोषराहित्यं विष्णोर्महिमा उक्तः । वेदस्य तथा उपपादनं वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वमर्थात् सिद्धं वेदमहत्त्वम् ॥

**११. एकादशं सर्वधर्माधिकरणम् । एकं सूत्रम् ।**

चेतनत्वात् विष्णोः अपूर्णता इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ इति ।

स्वतन्त्रत्वात् विष्णुः पूर्णगुणः 'गुणाः श्रुताः ........ अश्रुता अपि' इति श्रुतेश्च । अतः विष्णोः सर्वपूर्णगुणवत्त्वं युक्तमेवेति स्थितम् ॥ ३८ ॥ अ० ॥ ११ ॥

अत्र ब्रह्मणः युक्त्यविरुद्धत्वविशेषसहितगुणपूर्णत्वं महिमा उक्तः । तथा वेदस्य प्रतिवाक्यमुपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

द्वितीयस्याद्यपादेऽस्मिन् सूत्राणामर्थसंग्रहः ।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ॥

श्रीवेदव्यासाय नमः । श्रीगुरुभ्यो नमः । हरिः ॐ ।

# ब्रह्मसूत्राधिकरणार्थसंग्रहः

## द्वितीयाध्याये प्रथमः पादः

आद्याध्याये च कर्तृत्वं विष्णोरुक्तं समन्वयात् ।
प्रव्रत्त्युत्पत्तये तत्र विरोधोऽत्र निवार्यते ॥ १ ॥

विरोधः प्रथमे युक्तेः पादेऽस्मिन् परिहार्यते ।
१ श्रुतिसंवादयुक्ताभिः विष्ण्वाद्याप्ततमैः पुनः ॥ २ ॥

कृताभिः स्मृतिभिर्विष्णुः कर्तेति प्रतिपादितः ।
निषेद्धुं तं न शक्नोति स्मृतिः श्रुतिविरुद्धगा ॥ ३ ॥

फलसंवादराहित्यात् अल्पज्ञैश्च कृतत्वतः ।
२ स्वतो वेदः प्रमाणं तु नित्यस्सफलवांस्तथा ॥ ४ ॥

स्मृतिस्तस्यानुकूला हि वैष्णवी स्वार्थसाधिका ।
३ न विरोधोऽस्ति वेदस्य प्रत्यंशे युक्तितः क्वचित् ॥ ५ ॥

यथा मृदब्रवीदत्र ह्यभिमानी तु कथ्यते ।
४ जगतः कारणत्वेन श्रुतिप्राप्तासदादयः ॥ ६ ॥

ब्रूयुर्विष्णुं न तत्रास्ति विरोधो युक्तितोपि हि ।
५ मुक्तावपि हरेर्जीवादन्तर्भेदोऽस्ति दर्शनात् ॥ ७ ॥



६ अनुप्रवेशतो विष्णोस्तदन्यत्कारणं श्रुतम् ।
सृष्टिः कारणमादाय परमैश्वर्यसाधिका ॥ ८ ॥

अनुप्रवेशवान्विष्णुः प्रकृतिं प्रेरयत्यजः ।
स्वरूपसत्त्वदातृत्वं प्रेरकत्वमुदाहृतम् ॥ ९ ॥

स्वतन्त्रः परमो विष्णुः सर्वस्याशेषकारणम् ।
कार्यकारणरूपस्य जगतश्चैकमूलता ॥ १० ॥

७ हितस्याकरणाज्जीवः करणादहितस्य च ।
परतन्त्रो ह्यकर्तासौ स्वातन्त्र्यात्सर्वकृद्धरिः ॥ ११ ॥

८ यो दोषो जीवपक्षे स्यात् स दोषो नैव चेश्वरे ।
ईशश्शब्दैकगम्यो हि विचित्रस्सर्वशक्तियुक् ॥ १२ ॥

९ विष्णोः सृष्टिः सुखोद्रेकाज्जगतः श्रेयसे तथा ।
१० स्वाधीनानादिकर्माणि ह्यपेक्ष्यैव सुखादिकम् ॥ १३ ॥

ददन्विष्णुर्न वैषम्यं नैर्घृण्यं चाप्नुयात्क्वचित् ।
अनादिकर्मनेतापि निर्दोषश्च श्रुतौ श्रुतः ॥ १४ ॥

११ श्रुताश्रुतगुणा विष्णोरविरुद्धाश्च सर्वथा ।
अतो युक्त्यविरुद्धास्ते लब्धाः शब्दसमन्वयात् ॥१५॥

आद्ये चतुर्थपादेऽस्मिन् नयानामर्थसंग्रहः ।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ॥

श्रीवेदव्यासाय नमः। श्रीगुरुभ्यो नमः। हरिः ॐ।

## अथ ब्रह्मसूत्रार्थसंग्रहे द्वितीयाध्याये द्वितीयः पादः

सर्वविरोधेषु युक्तिविरोधः प्रबलः। अतः स एव प्रथमपादे निराकृतः। इतरविरोधलये समयविरोधस्य प्राबल्यात् सोऽत्र निराक्रियते। पूर्वपादे 'इतरेषां चानुपलब्धेः' इति सामान्यतः समया निराकृताः। तथापि समयाः अनादिकालतोऽनुवृत्ताः प्रतीतिसुन्दराः श्रोतृबुद्धिं मोहयन्ति। अतो विशेषेण निराकरणमर्हन्ति।

समयाः हैतुकाः पाषण्डाश्चेति द्विविधाः। 'अक्षपादकणादौ च सांख्ययोगौ च हैतुकाः। बौद्धपाशुपताद्यास्तु पाषण्डा इति कीर्तिताः' इति। युक्तिमत्वात् हैतुकाः तत्र प्रबलाः। तत्रापि सांख्यचार्वाकौ अतीव विरोधिनौ। उभावपि ईश्वरनिरपेक्षाचेतनप्रवृत्तिवादिनौ। तत्र चार्वाकः तुच्छः। सांख्यो द्विविधः। निरीश्वरः सेश्वरश्च। तत्र निरीश्वरः विशेषतो विरोधी। अतः स प्रथमतः निराक्रियते सूत्रकारेण।

### १. प्रथमं रचनाधिकरणम्। सूत्रचतुष्टयात्मकम्।

१. विष्णुः सर्वकर्तेत्युक्तम्। तन्न युक्तम्। प्रकृतेरेव महदादिकारणत्वात्। इयं तु कार्यसदृशं कारणम्। न च प्रेरकः ईश्वरः अंगीकर्तव्यः प्रयोजनाभावात्। प्रकृतिरेव सर्वं साधयति। अतः सैव कर्त्री। कर्तृत्वेनेश्वरांगीकारोऽयुक्त इति प्राप्ते सिद्धान्तयत् सूत्रम्।



॥ ॐ रचनानुपपत्तेश्च नानुमानम् ॐ॥ इति।

अनुमानकल्पितं प्रधानमचेतनम्। अतः स्वतः प्रवृत्त्यशक्तम्। अतश्च रचनानुपपत्तिः। स्वतः प्रवृत्तिमदेव कर्तृ भवति। स्वतः प्रवृत्तिमांश्च विष्णुः। अतः स एव कर्ता इत्यर्थः॥ १॥

२. तत्रैव युक्त्यन्तरम्

॥ ॐ प्रवृत्तेश्च ॐ॥ इति।

महदादिसृष्टिः चेतनेच्छानुसारिणी। सृष्टित्वात् पटसृष्टिवत् इत्यनुमानविरुद्धमचेतनस्य कारणत्वम्। 'पटादिसृष्टौ' 'अहं करोमि' इति चेतनप्रवृत्तिर्दृश्यते। तथैव महदादिसृष्टिः चेतनव्यापारमपेक्षते इति भावः॥ २॥

३. उक्तमाक्षिप्य समादधत् सूत्रम्।

॥ ॐ पयोंबुवच्चेत्तत्रापि ॐ॥ इति।

अचेतनत्वात् स्वतः प्रवृत्तिर्नेत्युक्तम्। तदसंगतम्। पयसः दध्याकारेण परिणामः, अंबुनो गतिः, तथा कूलस्य पतनमित्यादेः स्वतः प्रवृत्तिदर्शनात् इति प्राप्ते तन्न युक्तम्। पयोम्बवादिप्रवृत्तावपि ईश्वरनिमित्तत्वं श्रुतिः प्रतिपादयति। 'एतानि ह वाव पयो मण्डं भवति' 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्यो नद्यः स्यन्दन्ते' इत्यादेः। ततः तद्दृष्टान्तेन प्रधानस्य स्वतः प्रवृत्तिः निषेद्धव्या इति भावः॥३॥

४. अयस्कान्तदृष्टान्तेन अचेतनस्य प्रवृत्तिः किं न स्यादिति शङ्कां परिहर्तुं सूत्रम्।

॥ ॐ व्यतिरेकानवस्थितेश्च अनपेक्षत्वात् ॐ ॥ इति ।

सर्वां प्रवृत्तयः ईश्वरनिमित्तकाः ईश्वरव्यतिरेकेणासंभाविताः । अतः अचेतनप्रवृत्तौ न किमपि निदर्शनम् । अतएव स्वतः अचेतनप्रवृत्तिमतं प्रमाणविरुद्धं निष्प्रमाणकं च प्रेक्षावतामनपेक्षितमेवेति । विष्णोः सर्वकर्तृत्वं युक्तमेव प्रमाणसिद्धत्वादिति भावः ॥ ४ ॥ अ० ॥ १ ॥

अत्र तदेकनिष्ठसर्वप्रवर्तकत्वं विष्णोर्महिमा उक्तः । तथा वेदस्य सर्वत्रोपपादनं तथैव वेदजन्यज्ञानस्य मोक्षहेतुत्वमर्थात् सिद्धं वेदमहत्वम् ॥

## २. द्वितीयम् अन्यत्राधिकरणम् । एकं सूत्रम् ।

सेश्वरसांख्यमतमत्र निराक्रियते ।

ईश्वरस्य स्वातन्त्र्येण सर्वकर्तृत्वं निगदितम् । तन्न युज्यते । अचेतनादपि प्रधानात् जगदुत्पत्तिर्युज्यते । ईश्वरस्य अनुग्राहकत्वाभ्युपगमात् । यथा पृथिव्यैव तृणादिकार्याणां प्रधानकारणं पर्जन्यानुग्रहेणोत्पादयति । अत ईश्वरस्य अनुग्राहकमात्रस्य न स्वातन्त्र्येण कारणत्वमिति प्राप्ते समादधत् सूत्रम् ।

॥ ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ इति ।

ईश्वरस्य अनुग्राहकत्वमात्रमिति यदुक्तं तन्न युक्तम् । प्रधानादि सर्वेषां सत्तादिप्रदानाय ईश्वरस्सर्वगत इत्युक्तत्वात् । अत ईश्वरप्रेरणाम् अन्तरेण कस्यापि वस्तुनः सत्वस्यैवाभावात् । यदधीनं यस्य सत्तादि तत् तस्य अनुग्राहकमात्रं न भवति । 'ब्रह्मैवेदं सर्वम्' इति सर्वस्य तदधीनसत्ता उच्यते । न केवलं कार्यस्य ईश्वराधीनत्वं किन्तु कारणत्वेनाभ्युपगतप्रकृतिसत्तादेरपि तदधीनत्वमुच्यते । 'द्रव्यं कर्म च कालश्च इत्यादि च । च शब्देन प्रकृतिसत्तादिप्रदत्वमङ्गीकृतम्' इति हि भाष्यम् । अतः विष्णोरेव स्वातन्त्र्यम् इति तस्य जगज्जन्मादिकर्तृत्वं युक्तमेवेति सिद्धम् ॥ ५ ॥ अ० ॥ २ ॥



अत्र विष्णोः सर्वसत्ताप्रदत्वरूपस्वतन्त्रकारणत्वमहिमा उक्तः । तथा वेदस्य प्रत्यक्षरं तन्महिमोपपादनं तथैव वेदाध्ययनलब्धज्ञानस्य मोक्षहेतुत्वमर्थाल्लब्धं वेदमहत्वम् ॥

## ३. तृतीयम् अभ्युपगमाधिकरणम् । एकं सूत्रम् ।

अत्र लोकायतिक (चार्वाक) पक्षः निराक्रियते ।

न युक्तमीश्वरस्य कारणत्वम् । तस्यैवाभावात् । जगतः पूर्वस्मादुत्तरस्योत्पत्तिः स्वभावादेव मदिरोत्पत्तिवत् । श्रुत्यादेरप्रमाणत्वात् न बाधकत्वम् । अदृष्टस्य वस्तुनो धर्मादेरभावात् । दृष्टसामग्र्यैव जगन्निर्वाहात् । अनेन न जगत्कारणत्वमीश्वरस्येति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ अभ्युपगमेप्यर्थाभावात् ॐ ॥ इति ।

अदृष्टार्थ एव नास्ति कुत ईश्वरः कुतश्च कारणत्वम् ? इति हि चार्वाकः । तच्छास्त्रमधिकार्यादिरहितम् । धर्माद्यदृष्टानभ्युपगमे परस्परहिंसादिना अपकारस्यैव प्राप्तेः । धर्मादिभ्रान्तिनिरासाय शास्त्रम् इत्यभ्युपगमेपि प्रत्यक्षस्य धर्माद्यभावे प्रवृत्त्यभावात् शास्त्रमप्रयोजनं व्याहतं च भवत् उपेक्ष्यमेव भवति । एवं तस्य चार्वाकसमयस्य अविरोधकत्वात् ब्रह्मणः सर्वकारणत्वं सिद्धम् ॥ ६ ॥ अ० ॥ ३ ॥

अत्र नास्तिकवादैरप्यनिराकृतं कारणत्वं विष्णोर्महिमा उक्तः। तथा वेदस्य कारणत्वप्रतिपादनं तथैव अध्ययनलब्धज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ४. चतुर्थं पुरुषाधिकरणम् । सूत्रद्वयात्मकम् ।

१. पुरुषोपसर्जनप्रकृतिकर्तृत्ववादनिराकरणमत्र क्रियते। विवादग्रस्ता प्रवृत्तिः पुरुषोपसर्जनाचेतननिमित्ता । प्रवृत्तित्वात् । अश्मानयनादिप्रवृत्तिवत् इति प्रकृतेरेव जगत्कारणत्वसंभवात् विष्णोर्न सर्वकर्तृत्वमिति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ पुरुषाश्मवदिति चेत् तथापि ॐ ॥ इति ।

पुरुषाश्मवत् यथा पुरुषसंबन्धात् अचेतनं शरीरं प्रवर्तते तथा इति चेत् न । पुरुषोपसर्जनप्रधानकारणत्वे प्रमाणाभावात् । 'न ऋते त्वत् क्रियते किंचनारे' इति श्रुतेः परमात्माधीनशरीरप्रवृत्तिसाधनात् पुरुषोपसर्जनप्रधानाधीनत्वसाधने उक्तानुमानस्य दृष्टान्ताभावात् इत्यर्थः॥

२. हेत्वंतरेण प्रतिवाद्युदीरितदृष्टान्ते साध्यविकलतां साधयत् सूत्रम् । ॥ ॐ अङ्गित्वानुपपत्तेः ॐ ॥ इति ।

यदि शरीरमेव पुरुषोपसर्जनं प्रवर्तेत तर्हि शरीरमङ्गि पुरुषोऽङ्ग इति स्यात् । अयं च लोकव्यवहारविरुद्धः । परीक्षकैः पुरुषस्य अङ्गित्वाभ्युपगमात् । तथा च प्रधानस्याङ्गित्वानुपपत्तेस्तस्याङ्गत्वात् पुरुषस्य अनङ्गित्वमुपादाय प्रवृत्तमिदं मतमयुक्तमिति तन्मतविरोधाभावात् विष्णोः जगज्जन्मादिकारणत्वं सिद्धम् ॥ ८ ॥ अ० ॥ ४ ॥



अत्र लोकव्यवहारानुकूलसर्वकर्तृत्वं विष्णोर्महिमा उक्तः । तथा वेदस्य प्रतिवाक्यम् एतदर्थोपपादनं तथैव वेदजन्यं ज्ञानं मोक्षसाधनमिति अर्थात् सिद्धं वेदमहत्वम् ॥

## ५. पञ्चमम् अन्यथाधिकरणम् । सूत्रद्वयात्मकम् ।

१. अत्र प्रकृत्युपसर्जनपुरुषकर्तृत्ववादनिराकरणं क्रियते । विष्णोः कारणत्वमनुपपन्नम् । विमता प्रवृत्तिः प्रकृत्युपसर्जनपुरुषाधीना । प्रवृत्तित्वात् । अश्मानयनादिप्रवृत्तिवत् । श्रुतेरगणनात् दृष्टान्तोऽपि युक्त एवेति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॐ ॥ इति ।

च शब्देनाङ्गित्वानुपपत्तेः ग्रहणम् । प्राचीनपक्षात् अत्र अन्यथानुमितम् इति चेन्न । दृष्टान्ते प्राचीनपक्ष इव साध्याभावात् । पुरुषस्य शक्तिरस्ति चेत् शरीरं व्यर्थम् । यदि तस्य न शक्तिः तर्हि तस्याङ्गित्वमनुपपन्नम् । अत्र ईश्वरोऽङ्गीकार्यः । अश्मानयनमपि ईश्वरकृतमेवेति दृष्टान्ते साध्याभावः ॥ ९ ॥

२. अनीश्वरपक्षान् सामान्येन निराकुर्वत् सूत्रम् ।

॥ ॐ विप्रतिषेधाच्चासमंजसम् ॐ ॥ इति ।

स्वातन्त्र्यमनङ्गीकृत्य ईश्वरांगीकारे न किमपि प्रयोजनम् । सकलश्रुतिस्मृतियुक्तिभिर्विप्रतिषिद्धत्वादनीश्वरपक्षमसमंजसम् । 'श्रुतयः स्मृतयश्चैव युक्तयश्चेश्वरं परम् । वदन्ति तद्विरुद्धं यो वदेत्तस्मान्नचाधमः' इति पाद्मे । अतः विष्णोर्लक्षणं युक्तम् इति सिद्धम् ॥१०॥ अ० ॥५॥

अत्र श्रुतिस्मृतियुक्तिसिद्धं लोकानुभवाविरुद्धं च सर्वकर्तृत्वं विष्णोर्महिमा उक्तः। तथा वेदस्य प्रतिवाक्यं कर्तृत्वोपपादनं तथैव तस्य वेदोत्पन्नस्य ज्ञानस्य मोक्षसाधनत्वं च अर्थात् सिद्धं वेदमहत्त्वम् ॥

## ६. षष्ठं महदीर्घाधिकरणम्। सूत्रसप्तकम्।

१. अत्र परमाण्वारंभवादं निराकुर्वत् सूत्रम्।

॥ ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ॥ इति।

भावपदार्थाः षट्। द्रव्यगुणकर्मसामान्यविशेषसमवायभेदात्। गुणाश्रयो द्रव्यम्। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदेन नवविधम्। आकाशादिपञ्चकं नित्यम्। अन्यदनित्यम्। कर्मान्यत्वे सति जातिमात्राश्रया गुणाः रूपरसगन्धस्पर्शशब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्माः। ते च अनित्याश्रिता अनित्याः। नित्यद्रव्ये द्विविधाः। संयोगविभागयोरसमवायिकारणं कर्म उत्क्षेपणम् अपक्षेपणम् आकुञ्चनं प्रसारणं गमनम् इति पञ्चविधम् अनित्यम्। नित्यमेकमनेकसमवेतं सामान्यम्। अनेकविधम्। नित्यः सम्बन्धः समवायः एक एव। नित्यद्रव्यवृत्त्योऽन्त्याः विशेषाः। एतत् त्रयं नित्यमेव।

तत्र अनित्यं कारणत्रयजन्यम्। यत् समवेतं कार्यमुत्पद्यते तत् समवायिकारणम्। परमाण्वादिद्रव्यमेव। आदिसृष्टौ परमाणवो द्व्यणुकादिक्रमेण अवयविनमारभन्ते।

समवायिकारणप्रत्यासन्नं अवधृतसामर्थ्यम् असमवायिकारणम्।



प्रत्यासत्तिर्द्विविधा। कार्यैकार्थप्रत्यासत्तिः, कारणैकार्थप्रत्यासत्तिश्च इति। तत्र कार्यद्रव्यस्य अवयवसंयोग एव कार्यैकार्थप्रत्यासत्त्या असमवायिकारणं भवति। कार्यगतगुणानां च कारणगतगुणाः कर्म च कारणैकार्थप्रत्यासत्त्यादिना असमवायिकारणम्। कार्यगतकर्मणश्च कारणगतगुणकर्मणी कार्यैकार्थप्रत्यासत्त्या असमवायिकारणम्। तत्र परिमाणं कारणगतं कार्यगतपरिमाणस्य असमवायिकारणं भवति। परमाणुद्व्यणुकगतं त्र्यणुकगतपरिमाणकारणं न भवति। किन्तु संख्यादिनैव तज्जन्म।

एतदन्यत्कारणं निमित्तम्। ईश्वरादृष्टकालादि। स ईश्वरः आत्मविशेषः। संख्यादिपञ्चगुणयुक्तः कर्तृत्वोपयोगिज्ञानेच्छाप्रयत्नशाली च। शिष्टषड्गुणायोग्य इति कथं तस्य अनन्तगुणत्वम्? अतः पूर्वाध्यायो व्यर्थ इति प्राप्ते सिद्धान्तयत्सूत्राणि प्रवर्तन्ते। अत्र क्रमेण १. असमवायिकारणनिरासः २. निमित्तकारणनिरासः ३. समवायिकारणनिरासः ४. प्रलयनिरासः ५. परमाणुनित्यत्वनिरासः ६. परमाण्वनित्यत्वेपि बाधकम् ७. आरंभवादस्य अप्रामाणिकत्वम् इति निरासक्रमः।

असमवायिकारणनिरासे प्रकृतं सूत्रं महदिति। युक्तमेव विष्णोः गुणपूर्णत्वम्। परमाण्वारंभवादकल्पनायाः अप्रामाणिकत्वात्। परिमाणं त्र्यणुकादिगतं असमवायिकारणं न परमाण्वादिगतमिति हि तदुक्तम्। तन्न युक्तम्। महत्त्वात् दीर्घत्वाच्च त्र्यणुकादिगतात् परिमाणात् यथा चतुरणुकादि कार्ये परिमाणमुत्पद्यते तथा ह्रस्वत्वात् द्व्यणुकगतात् त्र्यणुकगतपरिमाणोत्पत्त्युपपत्तेः। परमाणुपरिमाणाच्च पारिमाण्डल्याद्

द्व्यणुकगतपरिमाणोत्पत्तिसम्भवात् । यदि ह्रस्वत्वं नारंभकं तर्हि महत्व-दीर्घत्वाद्यपि नारंभकं स्यात् । कारणविशेषाभावात् । इत्यादेः असमवायिकारणमसदेव ॥ ११ ॥

२. निमित्तकारणं निराकुर्वत् सूत्रम् ।

**॥ ॐ उभयथापि न कर्मातस्तदभावः ॐ ॥ इति ।**

ईश्वरेच्छा नित्या । प्रलयेऽपि सा वर्तत एव । तथापि तदा परमाणोः चेष्टा न विद्यते । तथैव अन्यदापि द्व्यणुकादि कार्यं नोत्पद्येत । ईश्वरेच्छायाः अनित्यत्वे च तस्याः कार्यत्वं तदुत्पत्तौ निमित्तं च अपेक्षितं स्यात् । तथा तदुत्पत्तौ ईश्वरेच्छायाः अनपेक्षत्वेन अन्यत्रापि कार्ये तदनपेक्षैव स्यात् । अतः उभयथापि ईश्वरेच्छानिमित्तकपरमाणुकर्माभावात् द्व्यणुकाद्युत्पत्तिर्न स्यात् । अतः द्व्यणुकाद्युत्पत्तौ ईश्वरेच्छानिमित्तमिति वादोऽयुक्त एव ।

वैदिकेश्वरपक्षे ईश्वरेच्छायाः नित्यत्वनिमित्तत्वयोरंगीकारेऽपि नायं दोषः । अत्र ईश्वरेच्छायां सत्यामपि कार्यानुत्पादादिः ईश्वराचिन्त्यशक्तित एवोपपन्ना भवति । इयं च शक्तिः 'परास्य शक्तिः' इति श्रुत्या सिद्ध्यति । परपक्षे तु ईश्वरः अनुमानमात्रसिद्धः । अतस्तत्र अचिन्त्यशक्तिः नाङ्गीक्रियत एव । व्याप्त्यभावात् ।

अस्मत्पक्षे दोषाभावस्य निमित्तान्तरमप्यस्ति । प्रलये कार्यानुत्पत्तेः ईश्वरेच्छानियतकालोऽपि निमित्तम् । अस्माभिः काले स्वाभाविकेश्वरेच्छानिमित्तकविशेषांगीकारात् । अतएव सृष्टिकालेत्यादि



परपक्षः सृष्टिनिमित्तकः सृष्टिकालः । सृष्टिसत्वे सृष्टिकालः सृष्टिकालसत्वे सृष्टिरिति अन्योन्याश्रयदोषदुष्टत्वान्न युज्यते ।

ईश्वरेच्छा नित्या । तथापि तत्तःकाले एव सृष्टिविषयत्वादि-विशेषाविर्भावो प्रमाणसिद्धः । एते विशेषाः अनौपाधिकाः । परपक्षे तु सृष्ट्याद्युपाधिकाः ।

कालविशेषे अदृष्टमपि न निमित्तम् । सृष्ट्यादिकाले सत्येव अदृष्टोद्बोधस्य सत्वात् । परपक्षे तु सृष्टिकालस्य सृष्टिनिमित्तत्वात् अदृष्टोद्बोधः कदा इत्यस्य परिहाराभावात् । अतस्स पक्षः अयुक्त एव ॥ १२ ॥

३. समवायिकारणं पराकुर्वत् सूत्रम् ।

**॥ ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ॥ इति ।**

परमाण्वादीनां द्रव्यादिकारणत्वमनुपपन्नम् । भिन्नयोः तयोः समवायांगीकारे समवायस्य समवायिभ्यां भिन्नत्वसाम्यात् मृद्घटयोः समवायः इति विशेषणविशेष्यभावोपपत्तये समवायांतरापेक्षा वर्तते इति अनवस्था । अत्र समवायपरंपरायां मूलसमवायासिद्धेः नान्यः कोऽपि समवायः सिद्ध्यति । यदि समवायः स्वनिर्वाहक इत्युच्यते तर्हि तेन विना गुणगुण्यादीनामेव स्वनिर्वाहकत्वांगीकारः युक्तः । एवं कारणत्रितयं भ्रान्तिकल्पितमिति सिद्धम् ॥ १३ ॥

४. उक्तक्रमेण सृष्टिनिरासानन्तरं प्रलयं पराकुर्वत्सूत्रम् ।

**॥ ॐ नित्यमेव च भावात् ॐ ॥ इति ।**

परपक्षे कार्यं सर्वदा स्यात् । न प्रलयः । समवायिकारणानां परमाणूनां सदा सद्भावात् । निमित्तभूतेश्वरेच्छादेः नित्यत्वात् । प्रलये असमवायिकारणस्य असत्वं वक्तुं अनुचितत्वात् । तत्र कारणाभावादेव । वस्तूत्पत्तिरपि तत्पक्षे नित्यैव स्यात् । समवायस्य नित्यत्वात् । प्रागसतः सत्तासमवायस्यैव जनित्वात् । अतः परपक्षे प्रलय एव अनुपपन्नः । प्रलयाभावे कारणचिन्ता व्यर्थैवेति भावः ॥ १४ ॥

५. परमाणुनित्यत्वं पराकुर्वत् सूत्रम् ।

॥ ॐ रूपादिमत्वाच्च विपर्ययो दर्शनात् ॐ ॥ इति ।

यत् रूपादिमत् तदनित्यं यथा घटः इति लोके दर्शनात् परमाणूनां रूपादिमत्वात् नित्यत्वविपर्ययः स्यात् ॥ १५ ॥

६. परमाणूनामनित्यत्वेपि न बाधकमित्याशङ्कां परिहरत्सूत्रम् ।

॥ ॐ उभयथा च दोषात् ॐ ॥ इति ।

परमाणूनां नित्यत्वे तद्वत् घटादेरपि नित्यत्वं स्यात् । रूपादिमत्वात् । अनित्यत्वे समवायिकारणाभावात् तदुत्पत्तेरभावः इति उभयथा च दोषात् ॥ १६ ॥

७. परमाणुवादस्य अप्रामाणिकत्वं प्रतिपादयत् सूत्रम् ।

॥ ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ॥ इति ।

परमाण्वारंभवादः श्रुत्याद्यपरिगृहीतः तद्विरुद्धश्च । अतः तस्य अतिशयेनानपेक्षता अनादरविषयता इति भावः । 'अहमासं पण्डितको हैतुको वेदनिन्दकः । आन्वीक्षकीं तर्कविद्याम् अनुरक्तो निरर्थकाम्' इति मोक्षधर्मवचनात् निरर्थकश्च ॥ १७ ॥ अ० ॥ ६ ॥



अत्र तदन्यस्य कारणत्वमसहमानं कारणत्वं विष्णोर्महिमा उक्तः । तथा वेदस्य विष्णुकारणत्वोपपादनं वेदोत्पन्नं तत्कारणत्वविज्ञानं मोक्षसाधनमिति अर्थात् सिद्धं वेदमहत्त्वम् ॥

## ७. सप्तमं समुदायाधिकरणम् । सूत्राष्टकम् ।

( अत्र पाषण्डिमतां निराक्रियते । )

तत्र प्रथमं परमाणुपुञ्जवादिमतनिराकरणम् । समुदाय इति ।

पाषण्डिनो द्विविधाः अवैदिका वैदिकाश्च । बौद्धाः जैनाश्च अवैदिकाः । बौद्धाः अनेकविधाः । अत्र वैभाषिका सौत्रान्तिकाश्च बौद्धाः निराक्रियन्ते ।

१. तत्रायं पूर्वः पक्षः । विष्णोरुक्तं सर्वकर्तृत्वं न युज्यते । 'रूपविज्ञानवेदनासंज्ञासंस्काररूपं जगत् परमार्थसत् परमाणुसमुदायमात्रम् । सर्वं क्षणिकम् । कालतः क्षणिकत्वं देशतः परमाणुत्वं सत्वम् । तच्च कालकर्मनिमित्तेन भवति । ईश्वरो न विद्यते । वेदः प्रमाणं न ।' इति प्राप्ते समादधत् सूत्रम् ।

॥ ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ इति ।

समुदायः नैकपरमाणुहेतुकः । असंभवात् । अनेकपरमाणुहेतुकत्वे मिलितानेकतत्समुदायः, समुदाये सति मिलितत्वमिति अन्योन्याश्रयः । परमाणूनां अमिलितत्वे समुदाय एव न संभवति । अमिलितानां सदा भावात् प्रलयाङ्गीकारः अनुपपन्नो भवति ॥ १८ ॥

२. उक्तमाक्षिप्य परिहरत् सूत्रम् ।

॥ ॐ इतरेतरप्रत्ययत्वादिति चेन्न उत्पत्तिमात्रनिमित्तत्वात् ॐ ॥ इति ।

समुदायस्य सदातनत्वेऽपि वित्तिव्यवहाराभावेन प्रलयः । व्यवहारश्च परमाणूनां परस्परापेक्षानिमित्तकः । सा च परमाणूनां सामीप्यापेक्षा । प्रलये सामीप्यं न वर्तते इति प्राप्ते परिहारः 'न उत्पत्तिमात्रनिमित्तत्वात्' इति ।

समुदायः सदा विद्यमानोऽपि वित्तिव्यवहारौ कादाचित्कौ इति न दोषः इति यदुक्तं तदयुक्तम् । तथात्वे न कदापि वित्तिव्यवहारौ स्याताम् । तथा हि । विरलाः परमाणवः मिलितानां कारणम् । ते च पुरुषेण द्रष्टव्याः । ते च एकैकं कार्यमुत्पाद्य नश्यन्ति । ततो द्रष्टुः न परस्परापेक्षा व्यवहारो वा संभवति । अन्यत्रदर्शनमन्यत्रपरस्परापेक्षा इत्यादि न युज्यते । पुरुषस्याप्यनित्यत्वात् । यदि मिलितपरमाणवः स्थायिनः स्युः तर्हि ते प्रतिक्षणं कार्यं कुर्युः । तथा च अल्पकाले एकस्मात् घटात् कुलालशालापूर्तिप्रसंगः ॥ १९ ॥

३. विशेषकार्योत्पत्तिं निराकुर्वत् सूत्रम् ।

॥ ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ ॥ इति ।

कारणस्य स्वसदृशकार्यमुत्पाद्य विनष्टत्वात् न विशेषकार्योत्पत्तिः। अन्यथा क्षणिकत्वभङ्गात् ॥ २० ॥

४. प्रतिक्षणोत्पत्तिनिरासकं सूत्रम् ।

॥ ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ॥ इति ।



कारणे विनष्टे कार्यमुत्पद्यत इति न युक्तम् । कारणाभावे इदमस्य कार्यमिति कार्यकारणभावानुपपत्तेः । कारणे विद्यमाने कार्योत्पत्तौ कारणस्य द्विक्षणवृत्तित्वं नाशाभावप्रसंगश्च । यदि तेन कार्योत्पत्तयः स्युः तदा सर्वकार्याणां यौगपद्यं स्यात् । कारणक्षण एव कार्योत्पादे तस्मिन् क्षण एव तत्कार्याणामुत्पत्तेः सर्वकार्याणां यौगपद्यमनिवार्यमिति भावः । पूर्वमध्यापरकलाविकलः क्षणः । अतः क्षणे भेदं कल्पयित्वा पूर्वार्धे कारणम् उत्तरार्धे कार्यमिति कार्यकारणभावव्यवहारः नोपपद्यते ॥

५. विनाशं निराकुर्वत् सूत्रम् ।

॥ ॐ प्रतिसंख्या प्रतिसंख्या निरोधाप्राप्तिरविच्छेदात् ॐ ॥ इति ।

क्षणिकमते यः सन्तानमन्तरेण प्रतिक्षणं विनाशः तथा सन्तानेन सह यः विनाशः तावनुपपन्नौ । तथा हि । कारणं प्रतिक्षणं कार्यमुत्पाद्य नश्यतीत्यत्र कार्यवियोगकाले कारणं सदेव । अतः तत् कार्यमुत्पादयेत् । कुतः ! कारणे सति कार्यं भवत्येवेति नियमस्य अङ्गीकारात् । तदुत्पत्त्यनन्तरमपि एवमेव । अतः प्रतिक्षणं नाश इति आद्यः पक्षः न युज्यते । द्वितीयोऽपि न युक्तः । सत एव घटस्य नाशः । अस्य सत्त्वादेव कार्यमुत्पादयेत् । कारणे सति कार्यं भवतीति नियमात् । तत्कार्यमप्येवम् । अतः सन्तानोच्छेदावसर एव न विद्यते । सन्तानस्य नित्यत्वे प्रलयानुपपत्तिः इति भावः ॥ २२ ॥

६. भावानां क्षणिकत्वं विना अर्थक्रियाकारित्वरूपं सत्त्वं नोपपद्यते इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ॐ उभयथा च दोषात् ॐ ॥ इति ।

कारणे सति कार्यं भवति इति नियमे कार्यं यावत्कारणभावि चेत् न तयोः कार्यकारणभावः । नियमाभावे तत्काले कारणं नार्थक्रियाकारि । अतः असत् ततः कार्यानुत्पत्तिश्च । तथा च तन्न क्षणिकम् । एवमुभयथापि बौद्धपक्षस्सदोषः । कथं तर्हि घटादिसत्त्वव्यवस्था इति चेत् जलाहरणादि योग्यतयैवेति भावः ॥ २३ ॥

७. यत् सत् तत् क्षणिकम् । यथा दीपादि । दीपादिषु विशेषदर्शनात् क्षणिकत्वसिद्धिरित्याशङ्कां परिहरत् सूत्रम् ।

॥ ॐ आकाशे चाविशेषात् ॐ ॥ इति ।

उक्तानुमानेन न क्षणिकत्वसिद्धिः । आकाशादिषु अविशेषदर्शनात् यत् सत् तत् न क्षणिकम् । यथा आकाशमिति अक्षणिकत्वसाधनात् । स्वरूपेण विद्यमानत्वमेव सत् । तत् आकाशे अस्ति इति भावः ॥ २४ ॥

८. प्रतिपक्षबाधकं सूत्रम् ।

॥ ॐ अनुस्मृतेश्च ॐ ॥ इति ।

सोऽयं दीपः इति अनुस्मृतेः साध्यविकलो दृष्टान्तः । तत्र विशेषदर्शनस्य भावभेदज्ञापकत्वे एकक्षणेऽपि भावभेदप्रसंगात् । प्रत्यभिज्ञायाः भ्रान्तित्वे विशेषदर्शनस्यापि भ्रान्तित्वम् । किंच परपक्षे वस्तुस्वरूपनिर्देश एव न घटते । यथा घटः क्षणिकः इत्यत्र घट इति परमाणवः समुदायो वा । आद्ये दृष्टान्ताभावः । द्वितीये समुदायस्य अवस्तुत्वेन घटस्यावस्तुत्वप्रसंगः । अतः वैभाषिकादिमतस्य अप्रामा-



णिकत्वात् विष्णोः जगत्कारणत्वे न शून्यमतविरोधः इति सिद्धम् ॥ २५ ॥ अ० ॥ ७ ॥

अत्र जगत्स्थायित्वसाधककारणत्वं विष्णोर्महिमा उक्तः । तथा वेदेन कारणत्वनिर्वचनं तथैव वेदोत्पन्नज्ञानं मोक्षसाधनमिति अर्थात् सिद्धं वेदमहत्वम् ॥

## ८. अष्टमं नासदधिकरणम् । सूत्रचतुष्टयात्मकम् ।

अत्र शून्यवादनिराकरणं क्रियते ।

१. परमार्थतो विद्यमानम् एकम् अन्तत्रयरहितं शून्यमेव । तदसंगमकारणम् । संवृतिसंबन्धेन शून्यात् जगदुदेति न विष्णुना इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥ इति ।

शून्यं न जगत्कारणम् । अदृष्टत्वात् । न तत्र प्रमाणम् । न प्रत्यक्षम् नानुमानम् नाप्यागमः, अनभ्युपगमात् इति भावः ॥ २६ ॥

२. शून्यस्य कारणत्वे को दोष इति शङ्कायां समादधत्सूत्रम् ।

॥ ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥ इति ।

अप्रामाणिकस्य शून्यस्य कारणत्वांगीकारे हेयोपादेयबुद्धिविषयतावर्जितानां खपुष्पादीनां सकाशात् कार्योत्पत्तिः स्यात् । न चेत् अन्यत्रापि न स्यात् असत्वाविशेषात् ॥ २७ ॥

३. शून्ये जगदध्यस्तम् । संवृतिवशात् शून्यमेव जगदाकारेण विवर्तते । अतः शून्यात् न परमार्थतो जगत्सम्भवतीति प्राप्ते सिद्धान्तयत्सूत्रम् ।

॥ ॐ नाभाव उपलब्धेः ॐ ॥ इति ।

जगतः सदिति प्रतीयमानत्वात् । परमार्थतो जगन्नास्तीति न युज्यते । रजतभ्रान्तावपि नेदं रजतं किंतु शुक्तिरेवेति बाध इव प्रकृतेऽपि नेदं मृषा सत्वादिति बाधात् ॥ २८ ॥

४. जगतः स्वप्न इव असत्वं किं न स्यात् इति प्राप्ते समादधत् सूत्रम् ।

॥ ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ॥ इति ।

जगत् प्रमाणसिद्धम् । अतः न स्वप्नादिसदृशम् । आदिपदेन रज्वादिभ्रान्तिग्रहणम् । स्वप्नादिरपि सन्नेव । तथापि स्वप्न एवायं न जाग्रत् इति जाग्रत्वादेः बाधकविषयत्वेन वैलक्षण्यात् । जगतो बाधः न शङ्क्यः । तत्र प्रमाणाभावात् । एवं शून्यमतमयुक्तम् । अतः विष्णोः जगत्कारणत्वं युक्तमिति सिद्धम् ॥ २९ ॥ अ० ॥ ८ ॥

अत्र शून्यवादापर्यवसितजगत्कारणत्वं विष्णोर्महिमा उक्तः । तथा वेदस्य विष्णुरूपजगत्कारणोपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षसाधनत्वमर्थात् सिद्धं वेदमहत्वम् ॥

## ९. नवमं न भावाधिकरणम् । सूत्रत्रयात्मकम् ।

विज्ञानवादोऽत्र निराक्रियते ।

१. नित्यं निरञ्जनं विज्ञानतत्त्वम् । तदेकमेव सत् । तदेव जगत् । न ततोऽतिरिक्तम् । अतः नेश्वरेण कृत्यमिति प्राप्ते सिद्धान्तयत् सूत्रम् ।



॥ ॐ न भावो अनुपलब्धेः ॐ ॥ इति ।

न विज्ञानमात्रं जगत् । तथा अनुभवाभावात् । जगत् विज्ञाने अध्यस्तमिति बाधितं जगतः सत्वात् । जगद्विज्ञानयोः परमार्थतः अभेद इत्यत्र न प्रमाणमस्ति । 'सहोपलम्भनियमात् अभेदो नील तद्धियोः' इति न युज्यते । तयोः भेदप्रतीतेः । भेदप्रतीतिः न भ्रान्तिः, बाधकाभावात् । सहोपलम्भेति प्रतिज्ञाहेत्वोः विरोधाच्च साहित्यस्य भेदसाधकत्वात् । प्रकाशते इति यत् तन्न विज्ञानम् । यथा ज्ञानम् । नीलादिः प्रकाशते । यत् प्रकाशते तत् विज्ञानं चेत् तर्हि स्ववृत्ति-विरोधः । अज्ञाने व्यभिचारः । प्रकाशत्वाभिप्राये हेतोरसिद्धिः ॥३०॥

२. विज्ञानजगतोरभेदं निराकुर्वत् सूत्रम् ।

॥ ॐ क्षणिकत्वाच्च ॐ ॥ इति ।

ज्ञानं क्षणिकम् । अर्थः स्थायी । अतस्तयोर्भेदः ॥ ३१ ॥

३. बौद्धमतानि सामान्येन निराकुर्वत् सूत्रम् ।

॥ ॐ सर्वथानुपपत्तेश्च ॐ ॥ इति ।

प्रमाणाभावात् श्रुतिस्मृतियुक्तिविरुद्धत्वाच्च सर्वे एते पक्षाः न ग्राह्याः । श्रुत्यादिकमुक्तं वक्ष्यमाणं च विवक्षितम् । एतच्चाधिकारिणं प्रति निरूपितम् ॥ ३२ ॥ अ० ॥ ९ ॥

अत्र ब्रह्मजगतोर्भेदमसहमानं जगत्कारणत्वं विष्णोर्महिमा उक्तः । तथा श्रुतेः प्रतिवाक्यं प्रतिपादनं तथा श्रुत्यध्ययनसाधितस्य ज्ञानस्य मोक्षसाधनत्वमर्थात् सिद्धं वेदमहत्वम् ॥

## १०. दशमं नैकस्मिन्नधिकरणम् । सूत्रचतुष्टयात्मकम् ।

अत्र जैनमतमपाकरोति सूत्रकारः ।

१. विष्णोरुक्तं कर्तृत्वमयुक्तम् । जगत् सदसदुभयं उभयविलक्षणं सदसदुभयविलक्षणं नैतत्सर्वं सर्वं च इति सप्तभङ्गि । तत् आत्मादृष्टात् दृष्टसाधनैश्च भवति । आत्मा कायपरिमाणः । अतः ईश्वरेण न किमपि प्रयोजनम् । इति प्राप्ते समादधत् सूत्रम् ।

॥ ॐ नैकस्मिन्नसंभवात् ॐ ॥ इति ।

सत् स्यात् असत् स्यात् अन्यच्च स्यात् इत्यपि एकस्मिन्नेव वस्तुनि न युज्यते । अदृष्टत्वेन असम्भवात् । जगतः व्यवस्थितसदसत् प्रकारद्वयमेव प्रामाणिकम् । अत्र न कोऽपि दोषः । अतः जैनैः जगत् सप्तभङ्गीति यदुच्यते तदयुक्तम् ॥ ३३ ॥

२. यत्तु जैनैः जीवस्य शरीरपरिमितत्वमुक्तं तत् शरीरगतचेष्टोपपत्त्यर्थं चेत् तत्प्रतिक्षेप्तुं सूत्रम् ।

॥ ॐ एवं च आत्माऽकार्त्स्न्यम् ॐ ॥ इति ।

पिपीलिकाशरीरस्थः कर्मवशात् गर्दभादिशरीरप्राप्तौ तत्र तस्य अपूर्णतैव स्यात् । ततश्च तेन न सर्वशरीरचेष्टा इति भावः । गजशरीरस्थः अणुशरीरं प्राप्नोति चेत् अतिरेकः स्यात् । तथा च शरीरपरिमाणत्वभङ्गः ॥ ३४ ॥

३. यदा यच्छरीरं प्राप्नोति तदा तत्परिमाणः इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ ॥ इति ।



पर्यायात् क्रमात् आत्मनः तत्तच्छरीरपरिमाणत्वे अविरोध इति न । विकारित्वादिप्राप्त्या अनित्यत्वप्रसक्तेः मोक्षाभावः शास्त्रवैयर्थ्यं च प्रसज्यते ॥ ३५ ॥

४. आत्मनः शरीरमन्तरेण परिमाणाभावाङ्गीकारे तत् प्रतिक्षिपत् सूत्रम् ।

॥ ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ॥ इति ।

परिमाणाभावे स्वरूपाभावः । परिमाणशून्यद्रव्याभावात् । अतः अन्त्यावस्थितेः मोक्षे परिमाणस्थितेः तदर्थत्वेन शरीरमङ्गीकार्यम् । तस्य शरीरस्य अनित्यत्वे संसारधर्मतैव स्यात् । नित्यत्वे अविशेषात् इदानींतनशरीरमपि नित्यं स्यात् । तच्च विरुद्धम् । अतः जैनमतस्य स्वव्याहतत्वात् तदभ्युपगतात्मनः कर्तृत्वासिद्धेः तद्विरोधाभावात् जगत्कारणत्वं विष्णोर्लक्षणमिति सिद्धम् ॥ ३६ ॥ अ० ॥ १० ॥

अत्र मोक्षशास्त्रानिवार्यत्वानुकूलजगत्कारणत्वमहिमा विष्णोरुक्तः । तथा वेदस्य प्रतिवाक्यं व्याख्यानं वेदोत्पन्नं तत् ज्ञानं मोक्षसाधनमिति अर्थात् सिद्धं वेदमहत्त्वम् ॥

एवं पाषण्डिसमयनिराकरणं समाप्तम् ॥

अथ वैदिकाभाससमयाः निराक्रियन्ते । वैदिकाभासाः पाषण्डिनः पाशुपतशाक्तेयसौरस्कान्दगाणपताः । तेषां पाशुपतस्य प्राबल्यम् ।

## ११. एकादशं पत्युरधिकरणम् । सूत्रपञ्चकम् ।

( पाशुपतनिराकरणम् )

१. पाशुपतास्त्वेवं वदन्ति । पशुपतिः सर्वज्ञः । सः मायामुपादानीकृत्य हिरण्यगर्भादिजगदुत्पत्त्यादि करोति इति श्रुतिस्मृतिभ्यः अवगम्यते । अतः न विष्णुः कारणमिति । एवं प्राप्ते सिद्धान्तयत्सूत्रम् ।

॥ ॐ पत्युरसामंजस्यात् ॐ ॥ इति ।

अज्ञजनप्रसिद्धः पशुपतिः न जगत्कारणम् । असमञ्जसत्वात् पारतन्त्र्यजननमरणादिदोषवत्वेन श्रुतत्वात् । 'यं कामये तं तमुग्रं कृणोमि..........अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हंत वा उ' ( ऋ. १०. ) इति; 'अस्य देवस्य मीळ्हुषो वया विष्णोरेपस्य प्रभृथे हविर्भिः विदेहि रुद्रो रुद्रियं महित्वम्, एको नारायण आसीत् न ब्रह्मा नेशानो........'(ऋ. ७. ४०.) इत्यादेश्च ॥ ३७ ॥

२. तत्रैव युक्त्यन्तरम् ।

॥ ॐ संबन्धानुपपत्तेश्च ॐ ॥ इति ।

अशरीरत्वात् तस्य जगता संबन्धो न युज्यते मृतपुरुषवत् इत्यर्थः । 'न ब्रह्मा नेशानो' (म.) इत्यादि श्रुतेः पारतन्त्र्यजननमरणादिदोषित्वेन प्रतीतत्वात् । सकलकारणस्य दोषित्वं न युक्तमिति भावः ।

अनेन रुद्रो न जगत्कर्ता शरीररहितत्वात् मृतपुरुषवत् इति अनुमानमुक्तं भवति ॥ ३८ ॥

३. तत्र हेत्वन्तरम् ।

॥ ॐ अधिष्ठानानुपपत्तेश्च ॐ ॥ इति ।

कार्यं कर्तुं तस्य अधिष्ठानमपेक्षितम् । प्रलये अपेक्षितमधिष्ठानं नास्ति इत्यर्थः । अनेन रुद्रो न कर्ता अधिष्ठानरहितत्वात् , व्यतिरेकेण कुलालवत् इत्युक्तं भवति ॥ ३९ ॥



४. उक्तमाक्षिप्य समादधत् सूत्रम् ।

॥ ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥ इति ।

यदि कारकव्रातस्य शरीरवदुत्पत्त्यादिकर्तृत्वोपयोगिता तदा तदुपादानहानिमित्तोत्पत्तिमरणे पशुपतेः स्याताम् । तथा च सुखदुःखभोगापत्तिः ततश्च न कर्तृत्वं तस्येत्यर्थः ॥ ४० ॥

५. तत्रैव दोषान्तरम् ।

॥ ॐ अन्तवत्त्वम् असर्वज्ञता वा ॐ ॥ इति ।

पशुपतिः शरीरी चेत् परिच्छिन्नः । अतस्तस्य न कर्तृत्वम् । तस्य यदि शरीराभावः तर्हि ज्ञानमेवासंभावितमिति असर्वज्ञः स्यात् । अतो न जगत्कारणत्वम् । तस्य शरीरमस्ति तच्च इच्छागृहीतमिति न युज्यते । अशरीरस्य इच्छाभावात् । तस्य नित्यं ज्ञानं शरीरानपेक्षम् इत्यपि शरीराभावादेवानुपपन्नम् ।

विष्णुपक्षे तु 'बुद्धिवान् मनोवान् अङ्गवान् प्रत्यङ्गवान्' इति श्रुतेः ज्ञानाभावादिदोषाः परिहृताः । 'किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मक शक्त्यात्मक' इति विष्णोर्देहस्य ज्ञानाद्यात्मकविष्णुस्वरूपाभिधाय्या श्रुत्या अन्तवत्त्वादिदोषाः परिहृताः । अतः पाशुपतविरोधाभावात् विष्णुः सर्वकर्तेति लक्षणसूत्रं सिद्धम् ॥ ४१ ॥ अ० ॥ ११ ॥

अत्र पारतन्त्र्यादिदोषसंभावनाद्यस्पृष्टकारणत्वं विष्णोर्महिमा उक्तः । तथा वेदस्य प्रतिवाक्यं व्याख्यानं वेदोत्पन्नं तत् ज्ञानं मोक्षसाधनमिति अर्थात् सिद्धं वेदमहत्त्वम् ॥

## १२. द्वादशम् उत्पत्त्यधिकरणम् । सूत्रचतुष्टयात्मकम् ।

(शक्तिमतदूषणमत्र क्रियते)

१. सार्वज्ञादिसकलगुणशालिनी सकलजननी शक्तिः श्रुतिस्मृतिभिरवगम्यते इति न विष्णोः कारणत्वमिति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ॐ उत्पत्त्यसंभवात् ॐ ॥ इति।

न शक्तिः कर्त्री। पुरुषाननुग्रहीतत्वात्। स्त्रीमात्रात् न कचिदपि उत्पत्तिः दृष्टा ॥ ४२ ॥

२. अस्ति शक्त्यनुग्राहकः सदाशिवः पुरुष इति केषांचित् शाक्तेयानां मतं निराकुर्वत् सूत्रम्।

॥ ॐ न च कर्तुः करणम् ॐ ॥ इति।

तस्य पुरुषस्य उत्पत्तिसाधनज्ञानाद्यभावात् उत्पत्त्यनुपपत्तिः ॥४३॥

३. तत्पुरुषस्य सार्वज्ञादिवदतो मतं निराकुर्वत् सूत्रम्।

॥ ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ॥ इति।

यदि शक्त्यनुग्राहकस्य पुरुषस्य सार्वज्ञादि तर्हि तत एवालं, किं शक्तिकल्पनेन? अतः शक्तिमतेन पाशुपताप्रतिषेधः स्यात्। तच्च निराकृतमस्माभिः ॥ ४४ ॥

४. एवं शक्तिमतत्रयं निराकृत्य सामान्येन दूषणम्।

॥ ॐ विप्रतिषेधाच्च ॐ ॥ इति।

सकलश्रुत्यादिविरुद्धं शक्तिमतमसमंजसम्। अतः विष्णुरेव सर्वजगत्कर्तेति लक्षणसूत्रं युक्तमिति सिद्धम् ॥ ४५ ॥ अ० ॥ १२ ॥

अत्र अनुभवविरुद्धकल्पनासहिष्णुजगत्कर्तृत्वं विष्णोर्महिमा उक्तः। तथा प्रतिवाक्यमुपपादनं तथैव वेदोत्पन्नं ज्ञानं पुरुषार्थसाधनम् इति अर्थात् सिद्धं वेदमहत्वम् ॥

द्वितीयस्य द्वितीयेऽस्मिन् सूत्राणामर्थसंग्रहः।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ॥

श्रीवेदव्यासाय नमः। श्रीगुरुभ्यो नमः। हरिः ॐ।

# ब्रह्मसूत्राधिकरणार्थसंग्रहः

## द्वितीयाध्याये द्वितीयः पादः

---

विष्णोः सर्वस्य कर्तृत्वे विरोधं समयैः कृतम्।
सुयुक्तिभिर्दृढाभिश्च निराचक्रे जगद्गुरुः ॥ १ ॥

पाषण्डीहैतुकश्चेति समयो द्विविधो भवेत्।
विष्णोरन्यस्य कर्तृत्वं सर्वे ते प्रवदन्ति हि ॥ २ ॥

हैतुकाश्चात्र दृश्यन्ते सांख्यचार्वाकतार्किकाः।
१ स्वतःप्रवृत्त्यशक्तत्वात् प्रधानं नैव कारणम् ॥ ३ ॥

जडत्वाच्छ्रुतितो बाधात् दृष्टान्ताभावतस्तथा।
सर्वं विष्णुकृतं तत्तु शासनादस्य वर्तते ॥ ४ ॥

२ सत्ताप्रदः प्रधानादेः स्वतन्त्रं कारणं हरिः।
विष्णोरन्यत्र कस्यापि भाव एव न विद्यते ॥ ५ ॥

३ धर्मादेश्च निषेधात् स्यात् चार्वाकस्त्वर्थहीनवान्।
हिंसको व्याहतस्तेन विष्णुतत्त्वं न बाध्यते ॥ ६ ॥

४ ऋते विष्णोर्न किञ्चित्स्यादतः पुंसोपसर्जनात्।
प्रवृत्तिः प्रकृतेश्चेति पुंसोऽङ्गित्वाच्च बाध्यते ॥ ७ ॥

५ जडोपसर्जनेनापि ह्यकर्ताऽशक्तितः पुमान् ।
अतोनीशस्य कर्तृत्वं बाधितं सर्वमानतः ॥ ८ ॥
ईशं परं श्रुतिश्चाह स्वतन्त्रो हीशतां व्रजेत् ।
६ ह्रस्वत्वात्पारिमाण्डल्यात् बीजं नासमवायि तु ॥ ९ ॥
कार्यस्यानुदयादेव निमित्तं कारणं न च ।
ईशेच्छायाश्च नित्यत्वे अनित्यत्वे न सा जनिः ॥१०॥
वैदिकेश्वरपक्षे तु सर्वशक्तेर्हि युक्तता ।
समवायानवस्थानात् समवाय्यपि नोभवेत् ॥ ११ ॥
नित्यत्वात्परमाणूनां कार्यं स्यात्सर्वदैव हि ।
रूपादेः परमाणूनामनित्यत्वं च संभवेत् ॥ १२ ॥
तन्नित्यत्वे सदा कार्यमनित्यत्वे कदापि न ।
श्रुतिस्मृतिविरुद्धत्वात्तर्कविद्या निरर्थका ॥ १३ ॥
७ पाषण्डिनो द्विधाः प्रोक्ताः वैदिकाश्चाप्यवैदिकाः ।
अवैदिका हि बौद्धाश्च जैनाश्चात्र निराकृताः ॥ १४ ॥
एकत्वे परमाणोश्च समुदायो न विद्यते ।
मेलने परमाणूनां समुदायस्ततस्ततः ॥ १५ ॥
इत्यन्योन्याश्रयो ज्ञेयः व्यवहारोपि दुर्घटः ।
कार्ये कारणनाशैव विशेषस्तेन नो भवेत् ॥ १६ ॥
अकारणे च कार्ये न भावे वा सर्वतो भवेत् ।
कारणे कार्यनैरयत्ये विनाशोऽत्र न युज्यते ॥ १७ ॥



नित्यं कार्यं भवेद्वात्र अभावे कार्यमेव न ।
क्षणिकं दीपवन्न स्यात् स्थायि नाकाशवद्भवेत् ॥ १८ ॥
अनुस्मृतेश्च दीपोऽपि स्थाय्येव क्षणिको न हि ।
इति वैभाषिका विष्णुं निषेद्धुं नैव शक्नुयुः ॥ १९ ॥
८ कारणं शून्यमित्यत्र प्रमाणं नैव दृश्यते ।
अतोऽसतश्च शून्यस्य कारणत्वे ह्यसद्भवेत् ॥ २० ॥
जगतस्तद्विवर्तत्वे तदेतदिति बाधकम् ।
स्वप्नादितोऽस्य भिन्नत्वे प्रतीतः परमार्थता ॥ २१ ॥
अतः शून्यमतं विष्णुं निषेद्धुं नैव शक्नुयात् ।
९ 'सहोपलम्भनियमात्' भेदो विज्ञानविश्वयोः ॥ २२ ॥
सत्वान्न विश्वमध्यस्तं विज्ञाने क्षणिकत्वतः ।
विज्ञानस्य च विश्वस्य स्थायिभावाद्विभेदतः ॥ २३॥
श्रुतीनां च स्मृतीनां च युक्तीनां च विरोधतः ।
विष्णुं विज्ञानवादस्तु बाधितुं नैव शक्नुयात् ॥ २४ ॥
१० सद्वाऽसद्वा भवेद्वस्तु सप्तभङ्गि भवेन्न च ।
आत्मनो परिमाणस्य हेतुर्देहो भवेद्यदि ॥ २५ ॥
अपूर्णतातिरेकश्च मोक्षाभावोह्यनित्यता ।
दोषास्तस्मादयं वादः विष्णुं नैव निवारयेत् ॥ २६ ॥
११ दोषित्वात् पारतन्त्र्याच्च न पतिः कारणं भवेत् ।
निर्देहो निरधिष्ठानो जगत्कर्तुं न शक्नुयात् ॥ २७ ॥

सामग्रीणां शरीरत्वे जन्ममृत्यादिकं भवेत् ।
शरीरे तु परिच्छेदः तदभावेऽज्ञता भवेत् ।। २८ ।।
अशरीरस्य नेच्छा स्यात्तदभावे ह्यकर्तृता ।
विष्णुपक्षे तु श्रुत्यैव सर्वशक्त्यादि सिध्यति ।। २९ ।।
तस्मात्पाशुपतं विष्णुं निषेद्धुं नैव शक्नुयात् ।
१२ पुरुषानुग्रहाभावान्न शक्तिः कारणं भवेत् ।। ३० ।।
सदाशिवो पुमान्न स्यात् ज्ञानादिरहितत्वतः ।
सार्वज्ञं यदि कल्प्येत तदा पाशुपतं भवेत् ।। ३१ ।।
सर्वश्रुतिविरुद्धत्वात् शक्तिपक्षो न तिष्ठति ।
तस्मात् शक्तिमतं विष्णुं निषेद्धुं नैव शक्नुयात् ।।३२।।

द्वितीयस्य द्वितीयेऽस्मिन् नयानामर्थसंग्रहः ।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ।।



एतावत्पर्यंतं प्रथमाध्यायं द्वितीये प्रथमद्वितीयपादौ च अधिकृत्य सूत्रार्थसंग्रहः कृतः । सूत्राणामर्थग्रहणे नियमेन चिन्त्यः मुख्योऽशः अत्र किंचिन्निरूप्यते । ब्रह्मजिज्ञासायाः कर्तव्यत्वविधानं हि अस्य ब्रह्ममीमांसाशास्त्रस्य एक एव उद्देशः । जिज्ञास्यं ब्रह्म च प्रथमाध्याये वैदिकसर्वशब्दसमन्वयमुखेन जगज्जन्मादिकारणत्वेन लक्षितम् । जिज्ञास्यब्रह्मणः वेदैकप्रतिपाद्यत्वात् तत्र युक्तिविरोधः द्वितीयस्य प्रथमे युक्तीनामाभासत्ववर्णनेन निराकृतः । दुराग्रहमूलको विरोधः द्वितीयस्य द्वितीये प्रमाणाभावप्रदर्शनमुखेन परिहृतः। ईदृशी ब्रह्मजिज्ञासा प्रथमसूत्राथशब्दमधिकृत्य ' अथशब्दो मंगलार्थोऽधिकारानंतर्यार्थश्च ' इति प्रवृत्ते भाष्ये 'मंगलार्थं' इत्यनेन व्यसनाभावादरनैरन्तर्यसहकृतमंगलमनोवृत्तिमपेक्षत इति 'अधिकारानन्तर्यार्थश्च' इत्यनेन वैराग्यविष्णुभक्तिरूपाधिकारानन्तरभाविनीति च उपपादिता । उक्तेषु च यस्य कस्याप्यभावे ब्रह्मजिज्ञासानुत्पत्तिरेवात्र युक्तः। अत्र विशिष्टस्याथशब्दार्थस्य सार्थक्यं पतिसूत्रव्याख्यानावसरे चिंतनीयम् इति तत्प्रकारः किंचिन्निरूप्यते ।

ब्रह्ममीमांसायां विचार्यं निर्धार्यं च इदमेव । वेदैकसमधिगम्यविषये वेद एव प्रमाणं, तादृशप्रमाणप्रतिपाद्यं ब्रह्मैवेति । ब्रह्मैकपरत्वं वेदस्य महिमा । वेदैकप्रतिपाद्यत्वं ब्रह्मणो महिमा । शास्त्रस्य न्यायाध्ययने प्रत्यधिकरणमेतत् चिंतनीयम् । एतन्निर्णयाभावोऽध्ययनदोषः । तस्य वेदनिष्ठत्वब्रह्मनिष्ठत्वासाधकत्वात् । अधिकारिणः प्रवृत्यर्थमेव ब्रह्मसूत्रार्थसंग्रहरूपायां अस्यां कृतौ तत्तदधिकरणोपसंहारे तत्तदधिकरणप्रतिपाद्यं ब्रह्मणो महत्वं तत्साधनार्थमेवं प्रवृत्तस्य वेदस्य

महत्वं च संग्रहेणोच्यते । कारणत्वस्य ब्रह्मस्वरूपत्वात् तत्तन्निरूपितकारणत्वं ब्रह्मणो महिमा । तत्प्रदिपादनं वेदस्य महिमा । प्रत्यधिकरणमेतन्निरूपणेन अधिकारिणो मनसि इदानींतनकाले मध्वशास्त्रविषये मध्वशास्त्रेणैव विस्पष्टं बाधिताः कैश्चनमाध्वमाध्वेतरैः कृताः याः कल्पनाः दृश्यन्ते—

१. मध्वोयं वेदं अज्ञात्वा पुराणादीनवलम्ब्य प्रमेयं व्यवस्थापयति इति कल्पना ।

२. अयं मध्वः शङ्करेणोक्तं त्यक्तं च सगुणमेव ब्रह्म निर्गुणज्ञानेऽसमर्थस्सन् सर्वोत्तमत्वेन जानाति इत्यादिकल्पना ।

३. (१) कैश्चन माध्वैरिदानींतनैः परिगृहीता 'वेदे अद्वैतश्रुतिरिति या शाङ्करैः उच्यते सा तेषामेव प्रमाणं नास्माक' मिति कल्पना ।

(२) तादृशवेदभागत्यागेऽपि शास्त्रं पूर्णमिति कल्पना ।

(३) वेद इव वेदानुकूलमपि प्रमाणमिति आचार्यैरुक्तत्वात् वेदस्य जीवभिन्नपरमात्मपरत्वात् यथाकथंचित् जीवभिन्नपरमात्मपराणि सर्वाण्यपि विविधपुरुषरचितानि वाक्यानि वेदसदृशप्रमाणानि अथवा अपरोक्षमूलत्वात् वेदादप्यधिकानि वा भवितुमर्हन्तीति कल्पना ।

(४) वेदस्य प्रमाणत्वात् तद्विषये विचारोऽपचारेति कल्पना ।

(५) ब्रह्मणः कारणत्वेन वेदोक्तत्वेऽपि जगति प्रकृतिजीवादि पदार्थानां नित्यत्वात् यावद्ब्रह्म तिष्ठति तावत्तेषां अनाद्यनन्तत्वेन स्थितेः ब्रह्मसदृशसत्ताकत्वात्तेषां, ब्रह्मणः सृष्टिकर्मणि तेषां सहायकत्वात् तेषाम् अभावे ब्रह्मणः एकस्यैव सत्वे शाङ्कराद्वैतमतप्रवेशापत्तेः ब्रह्मणोन्यत्र तेषां भाव्यत्वाच्च तन्निरूपितकारणत्वं ब्रह्मणो नास्तीति कल्पना ।



(६) अत एव ब्रह्मणः श्रुत्युक्तं कारणत्वं वस्तुतः तस्य अभावात् यथाकथंचित् श्रुतिप्रामाण्यरक्षणार्थं प्रतिवादिसमाधानार्थं प्रतारणार्थं वा पराधीनविशेषावाप्तिरूपमिति आचार्यैः कथितमिति कल्पना ।

—इति एतत्सर्वं शास्त्रवाक्यार्थाग्रहणनिमित्तं निर्मूलमेवेति निश्चयो दृढमुपजायते ।

तथा ब्रह्मविद्यांगभूतमानसमंगलवृत्तिः स्वभावनियता । वैराग्यभक्त्योः भक्तिरशास्त्राध्ययनलब्धा अध्ययनतद्विषयविषयकस्नेहरूपज्ञानात्मका । ज्ञानाज्ज्ञानमितिवत् । वैराग्यमपि 'विनिन्द्य चेतरान् मार्गान्' इत्यादिभाष्योक्तवाक्यपर्यालोचनया मिथ्याज्ञानतत्साधनत्यागरूपम् । अधममध्यमोत्तमभेदभिन्नस्य तस्य उत्तमो भागः आचार्यैरेव 'आब्रह्मस्तम्बपर्यन्तमसारं चाप्यनित्यकम् । विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः' इति विविच्यते । तदेव 'विष्णुपादैकसंश्रयः' इत्युक्तभक्तेरङ्गम् । तेषां ब्रह्मादीनां असारत्वमनित्यकत्वं तत्पारतन्त्र्यनिमित्तम् । श्रुतिबलेन यदधिकृत्य पूर्वपक्षः कल्प्यते तत्र श्रुत्युक्तस्य तस्य पारतन्त्र्यम् असारत्वमनित्यकत्वं यदि ज्ञायते तदैव तत्र स्नेहाभावः जायते । तत्तदधिकरणन्यायात् यदा तत्तत्कर्तृत्वेन विष्णुज्ञानं भवेत् तदा समन्वयद्वारा तत्तच्छब्दस्यापि विष्णुपरत्वज्ञानात् विष्णोः स्वातन्त्र्यं सर्वसारत्वं नित्यत्वं च ज्ञायते । विष्णोः तत्तन्निरूपितकारणत्वज्ञानमेवात्र साधनम् । एतदेव तत्तदधिकरणव्युत्पाद्यज्ञानम् । अनेन ज्ञानेन अधिकारी विष्ण्वैकनिष्ठः सर्वं विष्णुमयत्वेन पश्यन् दर्शयंश्च शास्त्रजिज्ञासायामुत्तमोत्तमोऽधिकारी भवति । अयं च प्रथमाध्याये प्रसक्तो विषयः ।

द्वितीये प्रथमद्वितीययोः पादयोः पूर्वपक्षोत्थापक वस्तुनः युक्त्याभासमूलत्वादाप्तमूलत्वाद्वा तस्य पारतन्त्र्यादिचिन्ता न वर्तत एव। अतः तृतीयचतुर्थपादयोरेव प्रकृतविचारस्यान्वयः। तस्य पूर्वपक्षोत्थापक-वस्तुनः श्रुतिसिद्धत्वात्। श्रुतेरमुख्यार्थत्वेन परिग्रहाच्च।

अतएव तत्तदधिकरणन्यायेन विष्णोः तत्तद्वस्तुविषयककारणत्वस्य उपसंहारप्रस्तावे श्रुतिसिद्धं यद्वस्तु पूर्वपक्षोत्थापकं भवेत् तस्य पारतन्त्र्यं असारत्वमनित्यकत्वं विष्णोर्विशेषज्ञानमुद्दिश्य निर्दिश्यते। सर्वथापि तत्तदधिकरणनिरूपितविष्णुतत्त्वज्ञानं प्रकृतवस्तुकारणत्वसाधितं ज्ञानम् एव। अत एव प्रत्यधिकरणं विष्ण्वर्थकश्रुतिसमन्वयः कारणत्वेनेति विशिष्यते।

नन्वेवं लक्ष्म्यादिजगतः असारत्वानित्यत्वसंपादकपारतन्त्र्यं मिथ्यात्वमेवेति प्राप्तमिति चेदस्त्यत्र विशेषः। मिथ्यात्वं यद्यत्र स्वतन्त्र-सत्ताभावस्तर्हि तन्मिथ्यात्वं वैष्णवमेव। तत्साधनार्थमेव शास्त्रस्य प्रवृत्तेः। जगतः स्वतन्त्रसत्तानिषेधमुखेन परमात्मनः स्वातन्त्र्य-साधनात्। यद्यदि सदसद्विलक्षणत्वाज्ञानकल्पितत्वादिमायावाद्युक्तमिथ्यात्वं तर्हि तदभावरूपसत्यत्वसाधनेन तन्निषिध्यते। तस्य मिथ्यात्वस्य वस्तुतः निर्गुणतत्त्वसाधकत्वात् इति दिक्।

प्रमेयस्यास्य विचिन्तनेन मध्वः ब्रह्मजगतोः सत्यत्वे साम्य-मङ्गीकृत्य द्वितत्त्वबहुतत्त्ववादी ब्रह्मप्राधान्यं न सहते इत्यादिना मिथ्यावादेन वस्तुतः वेदान्तरसरूपिणः सर्वलोकश्रेयस्करस्य ब्रह्मैकपरस्य वेदवाक्यार्थमीमांसारूपस्य माध्वभावस्यापलापः दूरीक्रियत इत्यलम्।

श्रीवेदव्यासाय नमः। श्रीगुरुभ्यो नमः। हरिः ॐ।

## अथ ब्रह्मसूत्रार्थसंग्रहे द्वितीयाध्याये तृतीयः पादः

---

### १. प्रथमं वियदधिकरणम्। सूत्रसप्तकम्।

अत्र पादे श्रुतीनां परस्परविरोधः परिह्रियते। ततः विष्णोः जगज्जन्मादिकारणत्वं समर्थ्यते। श्रुतिविरोधो द्विविधः अधिभूतादि-विषयः अध्यात्मविषयश्चेति। अस्मिन् पादे अधिभूतादिविषयः विरोधः परिह्रियते। सकारणकार्यभूतानि अधिभूतम्। तदभिमानिदेवता अधिदैवम् आदिपदार्थः।

१. पूर्वपक्षः — सकलजगज्जन्मादिकर्तृत्वं विष्णोरुक्तम्। तदयुक्तम्। वियतः अनुत्पत्तेः। तस्य उत्पत्त्यङ्गीकारे अनुभूतियुक्ति-बहुश्रुतिविरोधः। आकाशो अवकाशः। तस्य उत्पत्तिः अनुभवविरुद्धा। आकाशः अनुत्पत्तिमत्। विभुत्वादिति युक्तिः। 'अनादिर्वायमाकाशः' इत्यादि श्रुतयश्च सन्ति इति। न च 'आत्मन आकाशः संभूतः' इति श्रुत्या आकाशस्य उत्पत्तिः। बहुप्रमाणविरुद्धायाः अस्या श्रुतेरेवा-प्रामाण्यम्। तद्दृष्टान्तेन सकलापि श्रुतिरप्रमाणम्। तथा च श्रुत्या विष्णोः जगज्जन्मादिकारणत्वं न सिध्यति। अतो न तत्र श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ॐ न वियदश्रुतेः ॐ ॥ इति।

**वियत्**—आकाशम्। **न**—अनुत्पत्तिमत् न। **अश्रुतेः**—तत्र

श्रुत्यभावात् । वियतः अनुत्पत्तौ श्रुत्यभावात् । उत्पत्तावेव श्रुतिर्वर्तते । अतः श्रुतेः प्रामाण्यात् विष्णोः कारणत्वं सिध्यति इति भावः ॥ १ ॥

२. उत्पत्तौ प्रमाणं वदत् सूत्रम् ।

॥ ॐ अस्ति तु ॐ ॥ इति ।

'आत्मन आकाशः संभूतः' इत्यादिश्रुतिः उत्पत्तौ अस्त्येव ॥

३. अस्या अनादित्वाभिधायकश्रुतिविरोधाशंङ्कां परिहरत्सूत्रम्।

॥ ॐ गौण्यसंभवात् ॐ ॥ इति ।

**गौणी**-अनादित्वश्रुतिः गौणी । अमुख्यानादित्वं बोधयति। उत्पत्तिश्रुतिस्तु मुख्या । तस्याः बाहुल्येन प्राबल्यात् । **असंभवात्**— अनादित्वस्य मुख्यत्वे उत्पत्तिश्रुतिबाहुल्यं न स्यात् इत्यर्थः । आकाश-पदेन भूतावकाशतद्देवता उच्यन्ते । भूतं स्वरूपतः उत्पत्तिमत् । रूपित्वात् । 'आकाशो नीलिमोदेति' इति श्रुतेः । तदभिमानिनः शरीरोत्पत्तिद्वारा अस्त्येवोत्पत्तिः । अवकाशतदभिमानिनः पराधीनविशेष-लाभलक्षणोत्पत्तिरस्त्येव । एवं सर्वविषयत्वात् उत्पत्तिश्रुतिः मुख्या । संभूत इति संभवयुक्तिश्च प्रकृतार्थं साधयति ।

अत्रेदं द्रष्टव्यम् । पराधीनविशेषलाभलक्षणोत्पत्तिः नानादित्व-परिरक्षणार्थं प्रवृत्ता । किन्तु आपाततः अनादित्वेन प्रतीतस्य वस्तुनः मुख्यतः उत्पत्तिरस्तीत्युपपादनार्थं प्रवृत्ता । विशिष्टस्य पदार्थान्तरत्वात् विशेषस्योत्पत्तौ विशिष्टस्याप्युत्पत्तिरिति भावः । अन्यथा अनादित्वश्रुतेः गौणित्वोक्तिः विरुद्धा स्यात ॥ ३ ॥

४. श्रुतिसिद्धोऽयं प्रकृतार्थ इति दर्शयत् सूत्रम् ।



॥ ॐ शब्दाच्च ॐ ॥ इति ।

**शब्दाच्च**—अनादित्वश्रुतिः न मुख्यार्था । 'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्माकाल इति । अथ यान्यनित्यानि प्राणः श्रद्धाभूतानि-भौतिकानीति । यानि ह वा उत्पत्तिमन्ति तान्यनित्यानि । यानि ह वा अनुत्पत्तिमन्ति तानि नित्यानि । न ह्येतानि कदाचनोत्पद्यन्ते न विलीयन्ते पुरुषः प्रकृतिरात्मा काल इति । अथैतानि उत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः श्रद्धाकाश इति भागशो ह्युत्पद्यन्ते' इति भाल्लवेयश्रुतिः । अत्र उत्पद्यमानस्य स्वरूपोत्पत्तिपरत्वम् अनुत्पद्यमानस्य पराधीनविशेषावाप्ति-रूपोत्पत्तिपरत्वम् चेति तत्र नित्यशब्दः गौणः इति पूर्वत्रेव व्यवस्था युज्यते । अतः उत्पत्तिश्रुतिः मुख्या इति भावः ॥ ४ ॥

५. अनादित्वश्रुतिः न भाक्ता 'न जायते म्रियते' इति जीव-परत्वेन मुख्यार्थत्वदर्शनात् इत्याशंकां पराकुर्वत् सूत्रम् ।

॥ ॐ स्याच्चैकस्य ब्रह्मशब्दवत् ॐ ॥ इति ।

**स्याच्चैकस्य**—एकस्य उत्पत्तिमत्वमनुत्पत्तिमत्वं च गौणमुख्यत्वा-पेक्षया भवत्येव । अनुत्पत्तिमच्छब्दः ब्रह्मणि मुख्यः । आकाशे अमुख्यः । **ब्रह्मशब्दवत्**—यथा ब्रह्मशब्दः 'अथ कस्मादुच्यते परंब्रह्मेति बृंहति बृंहयति च इति श्रुतिः ब्रह्मणि मुख्यः । गौणत्वेन विरिंचादिष्वपि वर्तते । अत एव अब्रह्मत्वं चैतेषाम् । तथैवाकाशादीनां नानादित्वमिति भावः ॥५॥

६. तत्र कारणं प्रतिपादयत् सूत्रम् ।

॥ ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ ॥ इति ।

**प्रतिज्ञाहानिः**—ब्रह्मणोऽन्यस्य नित्यत्वे 'सर्वमसृजत' इति

प्रतिज्ञाहानिः । **अव्यतिरेकात्**–आकाशस्य सर्वांतःपातित्वात् अनित्यत्वम् । **शब्देभ्यः**—'आत्मा वा इदमेक एव अग्र आसीत्' 'सदेव सोम्येदमग्र आसीत्,' 'इदं वा अग्रे नैव किंचनासीत्' इत्यादिश्रुतिभ्यः । आकाश-ब्रह्मणोः सादित्वानादित्वे स्फुटं प्रतीयेते । अतएव 'आत्मन आकाशः संभूतः' इति संभूतशब्दः सार्थकः मुख्यार्थश्च ॥ ६ ॥

७. ब्रह्मण एव अनादित्वं अन्येषां सादित्वं प्रसाध्य तेन अनुत्पत्तिश्रुतेः ब्रह्मणि मुख्यत्वं जगति अमुख्यत्वं साधयत् सूत्रम् ।

॥ ॐ यावद्विकारं तु विभागो लोकवत् ॐ ॥ इति ।

**यावद्विकारं**–विक्रियमाणं वस्तु प्रकृत्यादि । **विभागः**–अल्प-शक्तिमत् । **लोकवत्**–यथा लोके । **तु**–ब्रह्म अविकारि । अत्र सूत्रे प्रयोगद्वयमवगम्यते । (१) वियत् उत्पत्तिमत् विभक्तत्वात् घटादिवत् । (२) ब्रह्म नोत्पत्तिमत् अविभक्तत्वात् व्यतिरेकेण घटादिवत् इति । एकोऽविभक्तः परमः पुरुषो विष्णुरुच्यते । 'प्रकृतिः पुरुषः कालः त्रय एते विभागतः । विभागो अल्पशक्तिः स्यात् न तदस्ति जनार्दने' इति बृहत्संहितायाम् । अत्र वियत्पदं अनादित्वेन प्रसिद्धानां प्रकृत्यादीनां उपलक्षकम् । अतः श्रुत्यविरोधेन विष्णोरितरस्य उत्पत्तिसिद्धेः सर्वकारणे ब्रह्मणि श्रुतिसमन्वयः युक्तः ॥ ७ ॥ अ० ॥ १ ॥

अत्र वियदधिकरणे श्रुत्यर्थनिर्णयाभावनिमित्तेन न्यायादिदर्शन-संस्कारमहिम्ना जगन्नित्यत्वे आदरातिशयेन तन्मूलकलौकिकसुखापेक्षया च अनादित्वेन श्रुतिप्रतीतत्वेन प्रसिद्धस्यापि ब्रह्मेतरस्य वियदादिजगतः मुख्योत्पत्तिप्रतिपादकश्रुतेः अनुत्पत्तिश्रुत्यभावात् गौणानादित्वविभक्तत्वादि-



युक्तिभिश्च पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा ब्रह्मान्यानुत्पत्तिविषय-श्रुतेश्च गौणानादित्वपरत्वोपपत्तेः तादृश श्रुतिविरोधनिरासपूर्वकं प्रकृतवस्तु-विषये स्वाधीन (ब्रह्माधीन) विशेषकरणापरपर्यायवस्तूत्पत्तिकर्तरि ब्रह्मणि भक्त्या सर्वश्रुतिसमन्वयमुखेन तस्य अनादिजगन्मुख्यकारणत्वं महिमा उक्तः । तथा सर्ववेदव्याख्यानं तथैव सर्ववेदाध्ययनलब्धमिदं ज्ञानं मोक्षसाधनमिति अर्थात् सिद्धं वेदमहत्त्वम् ।

एतद्ग्रंथे अस्मिन् अध्याये अन्तिमपादद्वये प्रत्यधिकरणम् उपसंहारव्याजेन तत्तदधिकरणोक्तगुणोपसंहारोपयोगितया भाष्यटीकाका-रैस्तत्रतत्रोक्तं मनसि कृत्वा अत्र उपसंहारवाक्ये उक्तरूपेण तत्तद्गुणस्वरूपं किंचिद्विव्रियते । अत्र पारतन्त्र्यं पराधीनसत्ताकत्वम् । 'ब्रह्मादीनामसारता नाम तेषामसर्वोत्तमत्वम् तत्पदादीनां मोक्षावरत्वं च ज्ञेयम्' इति टीकायामुक्तम् । अनित्यकत्वम् शश्वद्विकारित्वमिति 'क' प्रत्ययेन सूचितम् । भक्तिः माहात्म्यज्ञाननिमित्तकादरः । अयं च उपरि वक्ष्यते ।

इदमत्रावधेयम् । अधिकारिणां दुःखप्रहाणाय सर्वप्रवर्तकब्रह्म-तत्त्वप्रतिपादनार्थमेव वेदः प्रवर्तते । वेदप्रतिपाद्यविषयस्यातीवगाम्भीर्यात् वेदः अर्थनिर्णयात्पूर्वं स्वव्याहत इवावभाति । अत्र जगतः वेदप्रदाता वेदव्यासः वेदार्थनिर्णयाय ब्रह्मसूत्राणि चकार । मध्वः व्याहत्यादिदोष-परिहारपूर्वकं यथाचार्याभिप्रायं सूत्राणां भाष्यमारचयत् । एतदुपपादनार्थ-मेव सः श्रुतिस्मृतिवाक्यानि स्वभाष्ये विपुलमुदाहरति । सूत्रा-श्रयणेन मध्वोक्तवाक्यानां निष्कृष्टार्थज्ञापनायैव जयतीर्थेन भाष्यस्य

टीका रचिता । संप्रदायज्ञस्य गुरोः सकाशात् सर्वस्यास्य समीचीनाध्ययनमेव श्रुत्युक्तब्रह्मतत्त्वज्ञाने एकमेव साधनम् ।

मध्वाचार्येण वेदानामन्तो निर्णयः यस्मादिति वेदार्थनिर्णायकं ब्रह्मसूत्रमेव वेदान्तशब्दितमिति समर्थ्यते । सूत्रं विना वेदार्थनिर्णय एवात्र हेतुः । निर्णीतार्थरहितस्य वेदस्य प्रामाण्यासंभवात् । वेदप्रतिपाद्यं ब्रह्मैव नान्यत् । अन्यस्य ब्रह्मार्थकत्वात् । चेतनाचेतनोत्पत्यादिजगत्कारणत्वं ब्रह्मणो स्वरूपलक्षणम् । एतत्साधनार्थमेव 'ॐ जन्माद्यस्य यतः ॐ' इति सूत्रं प्रवृत्तम् । प्रतिसूत्रं लौकिकमुख्यवृत्तिम् अमुख्यं कुर्वत् परममुख्यवृत्त्या कारणत्वेन श्रुत्युक्तब्रह्मप्रतिपादनं हि माध्वभाष्यस्यासाधारण्यम् । अनेन ज्ञायते अधिकारिणा शास्त्रजिज्ञासुना परममुख्यवृत्त्या यथा ब्रह्मकारणत्वं वेदे प्रतिवाक्यं सूत्राक्षरैः सिध्यति तथा शास्त्रमध्येतव्यमिति । अतएव टीकायां प्रत्यधिकरणं कारणत्वेनेति शास्त्रसंगतिः विशिष्यते । तथापि मध्वसिद्धान्तानुयायिभिः इदानींतनैः कैश्चन जगति प्रकृत्यादिपदार्थविशेषाणामनादिनित्यत्वपरिरक्षणार्थमेव मध्वशास्त्रप्रवृत्तिरिति कथंचिन्मन्यमानैः स्वकीया कल्पनैव मध्वशास्त्रार्थत्वेन व्यवह्रियते । तेन मध्वः द्वितत्त्ववादी बहुतत्त्ववादीत्यादिकमपि साध्यते । वस्तुतस्तु ब्रह्मैकविषयकसूत्रव्याख्यानत्वेन प्रवृत्तस्य मध्वशास्त्रस्य ब्रह्मार्थत्वेनैव प्रवृत्तत्वात् ब्रह्मणो कारणत्वस्यामुख्यत्वं सापवादत्वं वा कल्पयत्सर्वमसंगतमिति निश्चय एव शास्त्रस्य न्यायाध्ययने अङ्गमिति ज्ञातव्यम् । अन्यथा शास्त्रेण न किमपि साधितं स्यात् । अकारणस्य अब्रह्मत्वात् जगन्नियत्वभ्रांतेः संसारहेतुत्वात् ।



एवं कारणत्वं विष्णुस्वरूपमिति सिद्धम् । अनेन सिध्यति कारणत्वं विष्णोर्नागन्तुको धर्मः यथाकथंचित् अमुख्यं वा इति । अस्यार्थस्य ग्रहणं तावत् शास्त्रसिद्धं शास्त्रप्रवर्तकं च । एतद्विरुद्धा कल्पना शास्त्रबाधिता । एतत्कल्पनावान् पुरुषः शास्त्रबाह्य एव तिष्ठति । कारणस्य ब्रह्मणोऽसिद्धेः ।

विष्णोः सर्वकारणत्वे तदितरस्य सर्वस्य कार्यत्वं स्वत एव सिध्यति । एवं तत्त्वद्वयमेव प्रामाणिकम् । विष्णुः कारणं जगत्कार्यमिति । विष्णौ न किमपि कार्यम् । जगति न किमपि कारणम् । अतः विष्णुः पूर्णं कारणम् । अतः अत्र कारणस्यास्तित्वं कार्यास्तित्वज्ञापकम् । कारणमिति कार्यसंग्राहकम् । तथा विष्णुरिति जगत्संग्राहकः । अतः विष्णुः कारणकार्यात्मकं सर्वसंग्राहकमेकं तत्त्वम् । पूर्वप्रतिपादितं तत्त्वद्वयं एकमेव तत्त्वं प्रतिपादयत् पदान्तरमिति भावः । 'स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्त्वमिष्यते' इति आचार्यैः ग्रन्थान्तरोक्तमपि एतमेवार्थं बोधयति । सर्वोऽप्ययं 'सर्वं खल्विदं ब्रह्म' इत्याद्युपनिषदर्थविशेष एव ।

कार्यरूपं जगत् श्रुत्यादिप्रतिपाद्यम् । तत्र किंचिन्नित्यम् । किंचिदनित्यम् । नित्यं सार्वकालीनम् । अनित्यं न तथा । ब्रह्म कालघटितजगतः कारणम् । कारणत्वं सत्तादिप्रदत्वम् । कालसत्तादिप्रदं ब्रह्म कालादधिवर्तते ।

जगति केषांचिद्वस्तूनां नित्यत्वादेव प्रागभावप्रतियोगित्वरूपम् अभूत्वाभवनरूपं वा कार्यत्वं तेषां न संभवति । अतः आचार्यैः पराधीनविशेषलाभलक्षणं कार्यत्वं तेषामुच्यते । ईदृशस्य कार्यत्वस्य ज्ञानं वक्ष्यमाणप्रक्रियाविशेषज्ञानमपेक्षते ।

(१) धर्मधर्मिणोरभेदः। (२) तत्तद्धर्मविशिष्टत्वेन प्रतीतस्य पदार्थान्तरत्वम्। (३) पदार्थ इति यत् तस्यैव तत्स्वरूपत्वम्। (४) सर्वस्यापि धर्मविशेषस्य विष्ण्वैकक्रुतत्वम्। (५) धर्मस्योत्पत्तेः तद्धर्मविशिष्टधर्मिणोत्पत्त्यर्थकत्वम्। (६) भागशोत्पत्तेः समग्रोत्पत्तिलिङ्गत्वम्। (७) सोऽयमिति प्रत्यभिज्ञाया अर्थस्थायित्वसाधकत्वम् इति।

एतत्सर्वं वस्तूत्पत्तिविषये तन्निर्वाहकत्वेन आचार्यैरेव व्यवस्थाप्यते। इदं मनसि निधाय पराधीनविशेषलाभलक्षणं जननं विज्ञेयम्।

सर्वस्यास्य ज्ञापनायैव जयतीर्थैः न्यायसुधायाम् एतदधिकरणप्रमेयनिरूपणार्थमेव 'अपूर्वविशेषोपजनने हि विशिष्टाकारोपजनोऽवश्यंभावी विशिष्टाकारश्च वस्तुस्वरूपाभिन्न इति तस्यैवासावुपजनो भवति। देवदत्तः शरीरी जातो विद्वान् जात इति घटः संयुक्तो जातः विभक्तो जात इति चावस्थितस्वरूप एव वस्तुनि विशेषावाप्तिमात्रेण जननव्यवहारो दृश्यत एव' इति कथ्यते। अत्र प्रथमं वाक्यम् अबाधितां विशिष्टवस्तूत्पत्तिम् उपपादयति। तत्प्रत्यायकत्वेन द्वितीयं वाक्यं लोकव्यवहारोपि तदनुकूल एवेति दर्शयति। विष्णोः साक्षात्सर्वकर्तृत्वमेवात्राभिधेयोऽर्थः।

## २. द्वितीयं मातरिश्वाधिकरणम्। एकं सूत्रम्।

अत्र विष्णौ श्रुतिसमन्वयसिद्ध्यर्थं मुख्यवायूत्पत्तिविषयश्रुतिविरोधः परिह्रियते।

पूर्वपक्षः—विष्णोः सर्वश्रुतिसमन्वय उक्तः। स न युक्तः।



वायोरनुत्पत्तिप्रतिपादकश्रुतिविरोधात्। 'तासां वायुर्वत्सः। सा वा एषा देवता अनाद्यिर्योऽयं पवते'. 'वायुर्वाव नित्यो' इति श्रुतेः। इयं न गौणी। तथात्वे तस्य वायोः 'वायुर्वाव चेतनो,' 'ते वायवे मनवे,' (ऋ. ७. ९१.) 'यस्य ... नोदयो न निम्लोचः' इत्यादिना अतिशयितचेतनत्वं सर्वदेवोपास्यता उदयनिम्लोचाभावः श्रुत्युक्तः न स्यात् इति प्राप्ते सिद्धान्तयत्सूत्रम्।

॥ ॐ एतेन मातरिश्वा व्याख्यातः ॐ ॥ इति।

**एतेन**—पूर्वोक्तविभक्तत्वादियुक्तिसमुदायेन। **मातरिश्वा**—मुख्यवायुरपि। **व्याख्यातः**—उत्पन्नः इति सिद्धः। अनुत्पन्नत्वे अश्रुतेः। उत्पत्तौ च 'प्राणाद्वायुरजायत' (पु. सू.) इत्यादिश्रुतेः। अनुत्पत्तिश्रुतिः ब्रह्मणि मुख्या। वायौ अमुख्या। स्याच्चैकस्येति न्यायात्। विभक्तशक्तित्वाच्च। उक्तव्यवस्थया पराधीनविशेषलाभरूपोत्पत्तिः वायोरस्त्यैवेति युक्तो विष्णौ सर्वश्रुतिसमन्वयः इति सिद्धम् ॥ ८ ॥ अ० ॥ २ ॥

अत्र मातरिश्वाधिकरणे श्रुत्यर्थानिर्णयात् विष्ण्वितरदेवतायां विश्वासाच्च अनादित्वाद्यसाधारणमहिमोपेतत्वेन श्रुत्या प्रतीतत्वेन भासमानस्यापि मुख्यवायोः मुख्यानुत्पत्तिश्रुत्यभावात् विभक्तत्वादियुक्तेश्च पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा वाय्वनुत्पत्तिविषयश्रुतेः गौणानादित्वपरत्वोपपत्तेः तद्विरोधनिरसनपूर्वकं वायौ स्वाधीनविशेषकरणापरपर्यायवायूत्पत्तिकर्तरि विष्णौ भक्त्या सर्ववेदसमन्वयमुखेन मुख्यवायूत्पत्ति-

कारणत्वं महिमा उक्तः । तथा सर्ववेदव्याख्यानं तथैव वेदोत्पन्नज्ञानस्य मोक्षसाधनत्वमर्थात्सिद्धं वेदमहत्वम् ।

## ३. तृतीयम् असंभवाधिकरणम् । एकं सूत्रम् ।

अत्र जगत्कारणे ब्रह्मणि सर्वश्रुतिसमन्वयसिद्ध्यर्थं तदुत्पत्तिविषय-श्रुतिविरोधः परिह्रियते ।

पूर्वपक्षः—विष्णोः सर्वकारणत्वेन श्रुतिसमन्वय उक्तः । स चायुक्तः । 'असतः सदजायत' (ऋ. १०. ७२.) इति श्रुतेः । अत्र असतः सतो ब्रह्मणो कारणतया श्रुतत्वात् । ब्रह्मोत्पत्तिश्रुतेः सयुक्तिकत्वात् ब्रह्मविषयकश्रुतिविरोधान्न ब्रह्मणि कारणतया श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत्सूत्रम् ।

॥ ॐ असंभवस्तु सतो अनुपपत्तेः ॐ ॥ इति ।

**सतः**—ब्रह्मणः । **असंभवस्तु**—अनुत्पत्तिरेव । **अनुपपत्तेः**—उत्पत्तेः अयुक्तत्वात् । 'असतः सदजायत' इति श्रुतौ असद् ब्रह्मैव । तदन्यकर्तृकविशरणाभावात् । 'तद्वा एतदसदाहुः नह्यासादयति कश्चन' इति श्रुतेः । सत् प्राणः । 'ब्रह्म वा असत् । सद्वाव प्राणः' (पैंगि.) इति श्रुतेः । ब्रह्म सर्वथा अनुत्पत्तिमत् । सत्वात् स्वातन्त्र्यात् व्यतिरेकेण घटवत् । ब्रह्मभिन्नं वियदादि मुख्यतः उत्पत्तिमत् अस्वतन्त्रत्वात् घटवत् । आपातार्थे असतः सकाशात पदार्थोत्पत्तिरनुपपन्ना च । दृष्टान्ताभावात् । अतः ब्रह्मणः अनुत्पत्तेः युक्तस्तत्र श्रुतिसमन्वय इति सिद्धम् ॥ ९ ॥ अ० ॥ ३ ॥



अत्र श्रुत्यर्थानिर्णयनिमित्तेन स्वतन्त्रे ब्रह्मणि चिद्रूपात् ब्रह्मकारणत्वेन श्रुतिप्रतीतस्यासतः नाशाभाववाचकासत्पदविषयत्वेन ब्रह्मवाचकत्वसमर्थनात् श्रुतिविरोधनिरासपूर्वकं तदसज्जन्यसच्छब्दवाच्यमुख्यप्राणस्य विनाशवाचकसच्छब्दवाच्यत्वहेतुना पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा सर्वथा नाशाभावसाधितस्वातन्त्र्यनिमित्तेन ब्रह्मणि भक्त्या सर्वश्रुतिसमन्वयमुखेन सर्वथानुत्पन्नकारणत्वं तस्य महिमा उक्तः । तथा वेदेन स्थापनं तथैव वेदोत्पन्नस्य ज्ञानस्य पुरुषार्थसाधनत्वमर्थात्सिद्धं वेदमहत्वम् ।

## ४. चतुर्थं तेजोधिकरणम् । एकं सूत्रम् ।

उक्तरीत्या ब्रह्मेतरस्य सर्वस्य मुख्यत उत्पत्तिः सिद्धा । अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं तेजोजननविषयश्रुतिविरोधः परिह्रियते ।

पूर्वपक्षः—न विष्णोर्जगत्कारणत्वम् । तेजसः वायुजातत्वात । 'वायोरग्निः' (तै. २. १.) इति श्रुतेः । वायुः द्वारकारणमित्युक्ते विष्णोस्सर्वशक्तत्वे द्वारकारणानुसरणं व्यर्थम् । अतः जगत्कारणत्वेन ब्रह्मणः सर्वश्रुतिवेद्यत्वाभावात्तत्र न सर्वश्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत्सूत्रम् ।

॥ ॐ तेजोतः तथाह्याह ॐ ॥ इति ।

**अतः**—विष्णोः परात् । **तेजो**—जायते । न वायोः । **हि**—यतः । श्रुतिः **तथा आह**—तथा प्रतिपादयति । 'तत्तेजो असृजत' इति श्रुतेः । 'वायोः अग्निः इति ब्रह्मस्वेच्छाया लीलयैव

वाय्वादि द्वारीकृत्य तेजःप्रभृतिकारणं भवतीति श्रुतिसिद्धत्वात् नोभयकारणकत्वं तेजसः। उभयकारणत्वप्रतीतिस्तु वायोरमुख्यवृत्त्या वायुशब्दबोध्यत्वनिमित्तका। न तु वायोः कारणत्वनिमित्तका। वायुरुपादानं विष्णुर्निमित्तमिति किं न स्यात्? इति चेत् न। वायुप्रभृतीनां देवतात्वात् उपादानशक्तेश्च विष्ण्वधीनत्वात् इति विष्णोः सर्वकारणत्वम्। अतएव कारणत्वेन तत्र सर्वश्रुतिसमन्वय इति सिद्धम् ॥ १० ॥ अ० ॥ ४ ॥

अत्र तेजोधिकरणे श्रुत्यर्थनिर्णयनिमित्तेन लोकव्यवहारप्रभावेन च तेजःकारणत्वेन श्रुत्युक्तत्वेन भासमानस्यापि वायोः तेजःकर्तृत्वश्रुतेरभावात् वायुनिष्ठकारणत्वादिशक्तेरीश्वरायत्तत्वलिंगाच्च वायोः पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा श्रुतिप्रतीतस्य वायोः विष्णोः स्वेच्छया तेजः प्रति द्वारकारणत्वकरणान्निमित्तात् वायुकारणत्वश्रुतिविरोधनिरासपूर्वकं विष्णोः परत्वान्निमित्तात् तत्र सर्वश्रुतिसमन्वयमुखेन तेजः कारणत्वं महिमा उक्तः। तथा सर्ववेदव्याख्यानम्, एवं व्याख्यानज्ञानस्य मोक्षहेतुत्वमर्थात् सिद्धं वेदमहत्त्वम्।

## ५. पंचमम् अबधिकरणम्। एकं सूत्रम्।

अत्र विष्णौ ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थम् अपां जन्मविषयश्रुतिविरोधः परिह्रियते।

पूर्वपक्षः — विष्णोरुक्तः जगत्कारणत्वेन सर्वश्रुतिसमन्वयः अयुक्तः। 'अग्नेरापः' (तै. २. १.) इति अग्नेरपां कारणत्वेनोक्तेः।



विमता आपः अग्नेर्जायन्ते अप्त्वात् स्वेदादिवत् इति युक्तियुक्तत्वात् श्रुतेः प्राबल्यम्। अतः न विष्णौ सर्वकारणत्वेन श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ॐ आपः ॐ ॥ इति।

आपोपि विष्णोः जायन्ते। 'ब्रह्मैवेदमग्र आसीत् तदपो सृजत तदिदं सर्वम्' इति श्रुतेः 'अग्नेरापः...' (तै. २.) इत्युक्तेऽपि ब्रह्मण एव अबादिसृष्टिः। 'अबादिसृष्टिः' इति भाष्ये आदिपदेन भूतानां वाय्वादीनामयमेव न्यायः इति ग्राह्यम्। 'इतरेषां तु सत्ताद्या यत एव,' 'तत्र तत्र स्थितो विष्णुः तत्तच्छक्तीः प्रबोधयन्। एक एव महाशक्तिः कुरुते सर्वमंजसा' इत्यादि भाष्योक्तप्रमाणैरिदमेव सिद्ध्यति। पूर्वं तेजोऽधिकरणे अभ्युत्पत्तौ श्रुतेः वायोः द्वारकारणताप्रतिपादकत्वम् अधिकरणनिमित्तम्। अत्र अग्नेः अप्कारणत्वे घर्मात्स्वेदः इति प्रत्यक्षानुकूल्यात् कारणत्वमिति विशेषाकांक्षानिवृत्त्यर्थमधिकरणम्। अत अपां ब्रह्मजातत्वात् विष्णौ सर्ववेदसमन्वय इति सिद्धम् ॥ ११ ॥ अ० ॥ ५ ॥

अत्र अबधिकरणे श्रुत्यर्थनिर्णयनिमित्तेन लोकानुभवानुसारेण च अप्कारणत्वेन श्रुत्या प्रतीतत्वेन भासमानस्याप्यग्नेः आदिसृष्टावग्निकारणत्वश्रुतेरभावादग्निनिष्ठकारणत्वादिशक्तेरीश्वरदत्तत्वादियुक्तेश्च अग्नेः पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा श्रुतिप्रतीतस्याग्निकारणत्वस्य विष्णोः स्वेच्छया अबुत्पत्तिद्वारकारणत्वकरणनिमित्तकत्वार्थकत्वोपपत्तेः अग्निकारणत्व-श्रुतिविरोधपरिहारपूर्वकं विष्णोर्महाशक्तिनिमित्तात् भक्त्या

सर्वश्रुतिसमन्वयमुखेनाप्कारणत्वं महिमा उक्तः । तथा वेदस्य उपपादनं तथैव वेदेनोत्पन्नज्ञानस्य पुरुषार्थसाधनत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ।

## ६. षष्ठं पृथिव्यधिकरणम् । एकं सूत्रम् ।

एतावत्पर्यन्तं सर्वस्य ब्रह्मेतरस्य साक्षात् अन्यद्वारा वा ब्रह्मजातत्वं सिद्धम् । अत्रोक्तसमन्वयसिद्ध्यर्थं द्वारविषयश्रुतिविरोधपरिहारः क्रियते ।

पूर्वपक्षः— वस्त्वन्तरद्वारा विष्णुः साक्षात्कारणम् इति तत्र श्रुतिसमन्वयः कृतः । स न युक्तः । द्वारबोधकश्रुतीनां परस्परविरोधात् । 'ता आप ऐक्षंत . . . ता अन्नमसृजन्त' (छां. ६.) इत्यत्र आपः अन्नकारणम् इति ज्ञायते । न च पृथिव्यन्नयोरभेदः । 'अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम्' (तै. २.) इति अन्नस्य पृथिवीजातौषधिजातत्वं प्रतीयते । अतः श्रुतिविरोधात् उक्तश्रुतेः अप्रामाण्ये न श्रुतिसमन्वयो ब्रह्मणि इति प्राप्ते तदप्रामाण्यं परिहरत्सूत्रम् ।

॥ ॐ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॐ ॥ इति ।

**पृथिवी**—'ता आपः अन्नमसृजन्त' इत्यत्रान्नशब्दः पृथिवीपरः । पृथिव्यन्नशब्दयोरेकार्थत्वात् । **अधिकाररूपशब्दान्तरादिभ्यः** — अधिकारात् भूतप्रकरणत्वात् अन्नश्रुतेः । **रूपात्**— पृथिवी कार्ष्ण्यप्रचुरा । अन्नमपि तथा इति । 'पृथिवी चान्नम् (ऐ. आ.) पृथिवी वा अन्नम्' (तै. ३.) इत्यादि शब्दान्तराच्च । ओषधीभ्यो अन्नमिति अन्नस्य पार्थिवत्वमेव वदति । 'अन्नमसितम्' (छां. ६.) इत्यपि अन्नस्य पार्थिवत्वाविरोधि । अन्नस्य पार्थिवत्वसाधनायासः कुतः इति चेन्न ।



आदिशब्दाद्युक्तिग्रहणात् । अपौरुषेयत्वेन श्रुतेः अप्रामाण्यकल्पनायोगात् । अतः श्रुतेरप्रामाण्यसंपादकार्थकल्पनं बाधितम् । 'विरोधो वाक्ययोर्यत्र नाप्रामाण्यं तदेष्यते । यथाऽविरुद्धता च स्यात् तथार्थः कल्प्य एतयोः' इति कौर्मवचनात् । एवम् अपां पृथिवीकारणत्वं सिद्धम् । अत्र पूर्वोक्तरीत्या पृथिवीशब्दस्य पृथिव्याः अमुख्यार्थत्वादिकं बोध्यम् । इदं तु परमैश्वर्यस्थापकमिति पूर्वपादोक्तमनुसन्धेयम् । सर्वस्यास्य प्रमेयस्योपपादकत्वेनैव वाय्वादीनां द्वारकारणत्वव्यवहारः । अतः न श्रुतिविरोधः । अतएव विष्णौ सर्वश्रुतिसमन्वयः इति सिद्धम् ॥ १२ ॥ अ० ॥ ६ ॥

अत्र पृथिव्यधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन लोकव्यवहाराश्रयेण च अप्पृथिव्योरन्नं प्रति द्वारकारणत्वेन श्रुत्या आपातप्रतीतयोरपि तयोः कारणत्वविषये पृथिव्यतिरिक्तनिष्कृष्टान्नशब्दितपदार्थश्रुतेरभावात् भूतप्रकरणत्वादियुक्तेश्च द्वारकारणत्वतत्कार्यत्वादेश्च परमात्मपरमैश्वर्यायत्तत्वाच्च कारणभूतानामपां कार्यभूतायाः पृथिव्याः पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा उक्तहेतुभिरन्नशब्दस्य पृथिवीपरत्वान्निमित्तात् द्वारकारणविषये तद्द्वारा परमात्मपरमैश्वर्यविषये श्रुतिविरोधनिरसनपूर्वकं विष्णौ परमैश्वर्यनिमित्तात्तत्र भक्त्या सर्वश्रुतिसमन्वयमुखेन सर्वशब्दप्रवृत्तिद्वारकारणव्यवस्थापकत्वादिपरमैश्वर्यं महिमा विष्णोरुक्तः । तथा वेदस्य प्रतिपादनं तदुत्पन्नज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ।

## ७. सप्तमं तदभिध्यानाधिकरणम् । एकं सूत्रम् ।

अत्र ब्रह्मणि श्रुतिसमन्वयसिध्यर्थं संहारविषयश्रुतिविरोधः परिह्रियते ।

पूर्वपक्षः—विष्णोः संहारकर्तृत्वेन श्रुतिसमन्वय उक्तः । 'यत्प्रयन्ति' (तै.) इति। स न युज्यते। 'रुद्रो मा विशान्तकः' (महा. ना.) इति रुद्रस्य संहारकत्वश्रुतेः । विष्णोः लोकपितृवत् जगदुत्पादकत्वात् न संहर्तृत्वम् । अतः श्रुतीनां परस्परविरोधेन अप्रामाण्यम् ब्रह्मणि च न श्रुतिसमन्वयः इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ तदभिध्यानादेव तु तल्लिंगात् सः ॐ ॥ इति ।

सः तु—संहर्ता विष्णुरेव । 'तस्याभिध्यानात् . . . विश्वमायानिवृत्तिः' (श्वे. १.) इति श्रुतेः । **तदभिध्यानात्**—भगवदभिध्यानात् तदिच्छाया संसारान्मोक्षो भवतीत्युक्तत्वात् । **तल्लिङ्गात्**—'तदिच्छाधीनत्वलिंगेन' । 'तत्कृतो अनुमीयते' । एवं च अनादेर्बन्धस्य लयकर्ता सुतरां सादेः जगतः लयकर्तेति सिद्ध्यति । सर्वशक्तत्वाच्च स एव संहारकर्ता । 'य इदं सर्वं विलापयति स हरिः' इत्यादिश्रुतेः । विष्णुः निर्ममः । अतः सः लोकपितृविलक्षणः । 'सृष्ट्यादिकं समस्तं तु विष्णोरेव पराद्भवेत्' (स्कांदे) 'निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः शर्वश्च' (भा.) 'स ब्रह्मणा विसृजति स रुद्रेण विलापयति' इति रुद्रादीनां निमित्तमात्रत्वकथनात् । अतः संहारकर्तृत्वे श्रुतिविरोधाभावात् विष्णौ श्रुतिसमन्वयो युक्त एवेति सिद्धम् ॥ १३ ॥ अ० ॥ ७ ॥

अत्र तदभिध्यानाधिकरणे श्रुत्यर्थनिर्णयनिमित्तेन लोकव्यवहार-



श्रयणेन लोकपितृदृष्टान्तेन च रुद्रस्य संहारकारणत्वेन श्रुत्या प्रतीतत्वेपि तस्य संहारकत्वविषये अनादिसंसारनिवर्तकत्वप्रतिपादकश्रुतेरभावात् जगत्संहारे निमित्तमात्रत्वकथनलिंगाच्च पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा विष्णिवच्छया प्राप्तस्यानादिसंसारस्य तदिच्छयैव निवृत्तेः युक्तत्वात् निर्ममस्य तस्य लोकपितृविलक्षणत्वात् श्रुतिस्मृतिबलाद्रुद्रस्य विष्णुकृतसंहारकर्मणि निमित्तमात्रत्वनिश्चयात् उक्तविषयश्रुतिविरोधपरिहारपूर्वकम् इच्छामात्रेण सर्वकर्तरि विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन सर्वसर्वसंहारकारणत्वं महिमा विष्णोरुक्तः । तथा प्रतिवाक्यं समर्थनं वेदस्य तथैव वेदोत्पन्नज्ञानस्य मोक्षहेतुत्वं च अर्थात् सिद्धं वेदमहत्त्वम् ।

## ८. अष्टमं विपर्ययाधिकरणम् । एकं सूत्रम् ।

अत्र विष्णोः वेदसमन्वयसिद्ध्यर्थमभिभूतादिसंहारविषयश्रुतिविरोधः परिह्रियते ।

पूर्वपक्षः—विष्णोः संहारकर्तृत्वमुक्तम् । अत्र 'अतएव हीदं परात्क्रमादुत्पद्यते' इति भाल्लवेयश्रुत्या वस्तूनि उत्पत्तिक्रमेण लीयन्ते वा । 'अक्षरात्परमादेव सर्वमुत्पद्यते क्रमात् । व्युत्क्रमाद्विलयश्चैव' इति चतुर्वेदशिखारीत्या 'व्युत्क्रमेण लीयन्ते वा' इति श्रुतीनां परस्परविरोधे प्रतीते क्रमादित्येव साधु । तस्यैव लोकानुसारित्वात् । तथा च व्युत्क्रमश्रुतिरप्रमाणम् । अतो विष्णोः श्रुतिसमन्वयः न शक्यः इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ विपर्ययेण तु क्रमोऽत उपपद्यते च ॐ ॥ इति ।

**विपर्ययेण तु क्रमः**— श्रुतौ क्रमवचनं तु व्युत्क्रमन्यपेक्षया । तु शब्दोऽवधारणे । **अतः**—उत्पत्तिक्रमवैपरीत्येन लयः । 'द्विविधः क्रम उद्दिष्टो व्युत्क्रमोऽनुक्रमस्तथा । सृष्टावन्यो लये चान्यः' इति श्रुतेः । अनुरूपः क्रमः सृष्टौ प्रतिरूपो लये क्रमः । इति क्रमेण भगवान् . . .' (पाद्मे) **उपपद्यते च**—पूर्वोत्पन्नानां सामर्थ्याधिक्यात् न लोकविरोधः । अतः श्रुतेर्विरोधाभावात् विष्णौ श्रुतिसमन्वयः सिद्धः ॥ १४ ॥ अ० ॥ ८ ॥

अत्र विपर्ययाधिकरणे श्रुत्यर्थनिर्णयनिमित्तेन लोकव्यवहार-लोकानुभवाश्रयणेन तत्त्वानां विषये उत्पत्तिक्रमेणैव लयस्य श्रुत्युक्तत्वेन आपातप्रतीतत्वेपि व्युत्क्रमेणैव लयस्य श्रुत्युक्तत्वात् व्युत्क्रमेपि क्रमवचन-संभवात् पूर्वसृष्टानां सामर्थ्याधिक्यात् अक्षरत्वपरमत्वादिपरमात्मलिङ्गाच्च लयस्य व्युत्क्रमत्वसाधनपूर्वकं पूर्वसृष्टानां भगवन्नियम्यत्वप्रयुक्तपारतन्त्र्या-सारत्वानित्यकत्वसमर्थनद्वारा सक्रमलयविषयश्रुतेः व्युत्क्रमपरत्वोपपत्तेः तच्छ्रुतिविरोधनिरासपूर्वकं विष्णौ परे अक्षरे भक्त्या सर्वश्रुतिसमन्वयमुखेन सर्वलयकर्तृत्वं महिमा विष्णोरुक्तः । तथा वेदस्य प्रतिवाक्यमुपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ९. नवमम् अन्तराविज्ञानाधिकरणम् । सूत्रद्वयात्मकम् ।

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थम् अधिभूतादिलयविषयश्रुति-विरोधः परिहृियते ।



१. पूर्वपक्षः — विष्णोः व्युत्क्रमेण सर्ववस्तुलयकर्तृत्वमुक्तम् । अत्र अधिभूतादिलयविषये विरोधः अस्ति । 'मनसश्च विज्ञानम्' इति (कठ. ३.) श्रुतौ मनस्तत्त्वाद्विज्ञानतत्त्वमुत्पन्नमिति ज्ञायते । 'यच्छे-द्वाङ्मनसि प्राज्ञः तद्यच्छेज्ज्ञान आत्मनि' (कठ. ३.) इति मनस्तत्त्वस्य पूर्वमेव लयः प्रतीयते । 'वाङ्मनसि यच्छेत्' इत्यस्य वाङ्मनसि लीयत इति स्मरेत् इत्यर्थः । अतः परस्परविरोधात् श्रुतेरप्रामाण्यात् विष्णौ न सर्वश्रुतिसमन्वयः इति प्राप्ते सिद्धान्तयत सूत्रम् ।

॥ ॐ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्न अविशेषात् ॐ ॥ इति ।

**अन्तरा विज्ञानमनसी** — विज्ञानमनसी अन्तरा व्युत्क्रमेण लयः । **क्रमेण** — तयोः उत्पत्तिक्रमेणैव लयः । **तल्लिङ्गात्** — 'यच्छेद्वाङ्मनसि प्राज्ञः' इत्यादेः । **इति चेन्न अविशेषात्** — विज्ञानमनस्तत्त्वयोः उत्पत्तिक्रमेणैव लये विशेषप्रमाणाभावात् । सर्वमपि व्युत्क्रमेणैव लीयते इति श्रुतिसिद्धत्वात् । 'मनसः विज्ञानम्' इत्यादेः इन्द्रियादिविषयत्वात् तस्य मनोविज्ञानतत्त्वपरत्वाभावात् न तद्विरोधः इति भावः ॥ १५ ॥

२. 'मनसश्च विज्ञानम्' इति श्रुतेः केषांचित् क्रमेणापि लयः किं न स्यात् इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ॐ चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तः तद्भावभावित्वात ॐ ॥ इति ।

अत्रेदं द्रष्टव्यम् । मनः शब्दः तत्त्वेऽन्तःकरणे च वर्तते ।

तथा विज्ञानशब्दः तत्त्वेऽन्तर्बोधे च वर्तते । तद्व्यपदेशः — 'मनसश्च विज्ञानम्' इति अयं प्रयोगः । **चराचरव्यपाश्रयः**—चराचरविषयः । **तद्भावभावित्वात्** — आलोचनाद्विज्ञानं भवति इति । **भाक्तः** — भागापेक्षया स्यात् । न विज्ञानतत्त्वापेक्षया मनसश्च विज्ञानमित्युक्तम् । अत्र तत्त्वविषये तु विज्ञानतत्त्वात् मनस्तत्त्वस्य उत्पत्तिः श्रूयते । अतः व्युत्क्रमेणैव लयः । 'विज्ञानतत्त्वात् मनः' 'परादव्यक्तमुत्पन्नम् अव्यक्तात्तु महांस्तथा । विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात् ॥ विज्ञानतत्त्वात्तु मनः मनस्तत्त्वात्तु खादिकम् । एवं बाह्यापरासृष्टिरन्तस्त-व्यक्त्यपेक्षया ॥ विपरीतक्रमो ज्ञेयो यस्मादन्ते हरेर्दृशि ।' इति स्कान्द-वचनात् । अतः श्रुत्यविरोधाद्विष्णौ श्रुतिसमन्वयः सिद्धः ॥ १६ ॥ अ० ॥ ९ ॥

अत्रान्तराविज्ञानाधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन लोकव्यवहार-प्रभावेन च मनस्तत्त्वोत्पादकविज्ञानतत्त्वस्य उत्पत्तिक्रमेणैव लयस्य श्रुति-प्रतीतत्वावभासस्यावकाशे विद्यमानेपि मनोविज्ञानशब्दयोस्तत्त्वातत्त्वार्थ-द्वयसद्भावात्तत्त्वविषये मनोवृत्त्या विज्ञानमनोवृत्तिर्मनोनाशाद्विज्ञाननाश इति वृत्त्युत्पत्तिक्रमेण मनोनाशेपि तत्त्वविषये विज्ञानतत्त्वस्य सामर्थ्याधि-क्यादीश्वरनियमितत्वलिङ्गाच्च विज्ञानलयस्यानन्तरभावित्वात् व्युत्क्रमेणैव लय इति साधनद्वारा विज्ञानतत्त्वस्य पारतन्त्र्यासारत्वानित्यकत्वसमर्थन-निमित्तेन तद्विषयश्रुतिविरोधनिरसनपूर्वकं विष्णौ सृष्ट्यादिनियामके विशेषतः सर्ववैदिकव्यवहारनिर्वाहके भक्त्या सर्वश्रुतिसमन्वयमुखेन सृष्टिक्रमविरुद्धक्रमेण लयकर्तृत्वं विष्णोर्महिमा उक्तः । तथा वेदस्य उत्पादनं वेदोत्पन्नस्य तज्ज्ञानस्य पुरुषार्थहेतुत्वमर्थात्सिद्धं वेदमहत्वम् ॥



वस्तुनः सामर्थ्यातिशयोपि पारतन्त्र्यादिद्योतक इति भावः ॥

## १०. दशमं नात्माधिकरणम् । एकं सूत्रम् ।

अत्र विष्णौ लयसिद्ध्यर्थं तल्लयविषय एव श्रुतिविरोधः परिह्रियते ।

पूर्वपक्षः—सर्वकर्ता विष्णुः 'नित्यो नित्यानाम्' (कठ. ५.) इत्युक्तः । स न युक्तः । 'तमसि निलीनः' इति (पैंगि.) श्रुतेः तस्य लयात् । चेतनत्वात् जीववत् परमात्मा लीयत इति युक्तियुक्तत्वाच्च । स्वतन्त्रत्वात् लयोपि युज्यते । अतस्तत्र श्रुतिविरोधात् न श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ नात्माऽश्रुतेः नित्यत्वाच्च ताभ्यः ॐ ॥ इति ।

**नात्मा**—न परमात्मा लीयते । **अश्रुतेः**—ब्रह्मलयस्य अश्रु-तत्वात । 'स इदं सर्वं विसृजति विलापयति . . . . एक एव' इति श्रुतेः । तमसि निलीन इति तस्य अपिहितत्वं पुनः प्रादुर्भावश्च श्रूयते । 'तुच्छ्येनाभ्वपिहितं यदासीत्' (ऋ. १०.) इति । **ताभ्यः** — 'नित्यो नित्यानाम्' 'सर्वदृक् शाश्वतश्च' इत्यादि श्रुतिभ्यश्च । **नित्यत्वाच्च**—परमात्मनः नित्यानामपि जीवादीनां नित्यत्वप्रदत्वरूप-नित्यत्ववत्वात् परमात्मलयस्य सर्वथा निरस्तत्वात् तत्र विष्णौ कारणत्वेन श्रुतिसमन्वयो युक्त एव ॥ १७ ॥ अ० ॥ १० ॥

अत्र नात्माधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन लोकव्यवहार-प्रभावेन ईश्वरतत्त्वासाधारण्याग्रहणेन च 'तमसि निलीनत्व' निमित्तेन ईश्वरलयस्य श्रुतत्ववदवभासमानत्वेपि ईश्वरनित्यत्वश्रुतेः ईश्वरस्य

नित्यानां नित्यत्वप्रदत्वलिंगाच्च ईश्वरान्यस्य सर्वस्य पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा ईश्वरविलीनत्वस्य अपिहितत्वार्थकत्तोपपत्तेः तस्य च प्रादुर्भावज्ञापकत्वात् ईश्वरलयविषयश्रुतिविरोधपरिहारपूर्वकं सर्वदृक्त्वेन शाश्वते विष्णौ सर्वश्रुतिसमन्वयसमर्थनमुखेन विष्णोः नित्यवस्तुकारणत्वरूपनियतत्वं महिमा उक्तः। तथा वेदेन प्रतिवाक्यं प्रतिपादनं तदुत्पन्नज्ञानस्य पुरुषार्थसाधनत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ११. एकादशं ज्ञोऽतएवाधिकरणम् । सूत्रद्वयम् ।

१. एवम् अधिभूताधिदैवपरमात्मविषयश्रुतिविरोधनिरासानन्तरम् अत्र परमात्मानि सर्वश्रुतिसमन्वयसिद्ध्यर्थं जीवविषयश्रुतिविरोधः निरस्यते।

पूर्वपक्षः—सर्वकर्तरि विष्णौ श्रुतिसमन्वयः उक्तः। स न युक्तः। 'नित्यो नित्यानाम्' इति जीवस्यापि नित्यत्वात् तस्य कारणाभावाच्च विष्णोः सर्वकारणत्वप्रतिपादकश्रुतेः तद्विरोधात् अप्रामाण्यमिति विष्णौ न श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ ज्ञोऽत एव ॐ ॥ इति।

ज्ञः—जीवोपि उत्पद्यते। अतः—ईश्वरात्। एव—तथाश्रुतेरेव। 'ते वा एते चिदात्मानः अविनष्टाः परंज्योतिः निविशन्ति अविनष्टा एव उत्पद्यन्ते' इति काषायणश्रुतिः। अत्र नित्यत्वाविरोधेन जीवस्योत्पत्तिः कथिता। अत्र जीवस्य नित्यत्वं न केवलम् उत्पत्त्यविरोधि किंतु तस्य विकारित्वमुपपादयत् शश्वदुत्पत्तिनिश्चायकम्। अतः नित्यत्वं गौणम् उत्पत्तिर्मुख्या ॥ १८ ॥



२. नित्यत्वम् उत्पत्तिरिति व्याहतिमाशंक्य तत्परिहरत् सूत्रम्।

॥ ॐ युक्तेश्च ॐ ॥ इति।

युक्तेः—उपाध्यपेक्षया जीवस्योत्पत्तिः युक्ता। च—समुच्चये। 'उत्पद्यन्ते चिदात्मानो नित्यानित्यास्परात्मनः। उपाध्यपेक्षया तेषामुत्पत्तिरिति गीयते।' इति व्योमसंहितायाम्। गीयते इति उत्पत्तेर्मुख्यत्वं द्योतयति। अतएव अत्र जीवानां पराधीनविशेषलाभरूपोत्पत्तिः उक्ता। अस्याः उत्पत्तेः ब्रह्मकारणत्वोपपादकत्वात् विशेषतो मुख्यत्वं स्वतः सिद्धम्। अतो श्रुत्यविरोधेन जीवस्य ब्रह्मजातत्वात् विष्णौ श्रुतिसमन्वयः युक्त इति सिद्धम् ॥ १९ ॥ अ० ॥ ११ ॥

अत्र ज्ञोऽतएवाधिकरणे वेदार्थानिर्णयनिमित्तेन विशेषतो न्यायादिदर्शनसंस्कारमहिम्ना स्वतंत्रस्य पुण्यपापादिभोक्तुर्जीवशब्दितस्य अवश्यमङ्गीकार्यत्वनिर्णयेन सर्वकर्तरि ईश्वरे विश्वासाभावेन च जीवनित्यत्वश्रुतेर्जीवोत्पत्त्यभावार्थकत्वे भासमानेपि नित्यानां नित्यत्वप्रदेश्वरनित्यत्वश्रुतेः ईश्वरेण नित्यदा जीवोत्पत्तिप्रतिपादयन्त्याः श्रुतेः तत्र जीवशब्दितस्य नित्यविकारित्वापरपर्यायपराधीनशरीरलाभादिविशेषावाप्तिदर्शनलिंगाच्च जीवशब्देन विवक्षितचेतनसामान्यस्य पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा जीवनित्यत्वस्य शश्वज्जीवोत्पत्त्यर्थकत्वोपपत्तेः जीवनित्यत्वविषयश्रुतिविरोधपरिहारपूर्वकं चेतनानां चेतनत्वप्रदे विष्णौ सर्वश्रुतिसमन्वयसाधनमुखेन मुख्यवृत्त्या शरीरसहितचेतनकर्तृत्वं महिमा ब्रह्मणः उक्तः। तथा वेदस्य प्रतिपादनं तथैव तदुत्पन्नज्ञानस्य पुरुषार्थसाधनत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## १२. द्वादशम् उत्क्रान्त्यधिकरणम् । सूत्रसप्तकम्

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं जीवपरिमाणविषयश्रुतिविरोधः परिह्रियते ।

१. पूर्वपक्षः—'व्याप्ताह्यात्मानश्चेतनाः' इति काषायणश्रुत्या जीवस्य व्याप्तत्वम् । 'अणुह्येष आत्मा' इति गौपवनश्रुत्या अणुत्वं च प्रतीयते। तत्र जीवः व्याप्तः। अत्र सर्वदेहगतस्पर्शरूपयुक्तिसत्वात् । अतः व्याप्तश्रुतिविरोधात् अणुश्रुतेरप्रामाण्यात् न विष्णौ श्रुतिसमन्वयो युक्त इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ उत्क्रान्तिगत्यागतीनाम् ॐ ॥ इति ।

**उत्क्रान्तिः**—'यः अस्माच्छरीरादुत्क्रम्य' इति । **गतिः**—'अमुं लोकमभिगच्छति' इति । **आगतिः**—'अमुष्मादिदं लोकम्' इति पौष्यायणश्रुतेः पतत्रिशरीरवत् उत्क्रान्तिगत्यागतिमत्त्वात् जीवः अणुरेव । न व्याप्तः । न मध्यमपरिमाणः । सांशत्वप्रसक्त्या अनित्यत्वाक्रियत्वादिप्रसंगात् ॥ २० ॥

२. जीवस्य उत्क्रान्त्यादिषु स्वातन्त्र्यप्रतीतेः स्वयमेव ते संभवान्ति इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ॐ स्वात्मना चोत्तरयोः ॐ ॥ इति ।

'एकः प्रसूयते जन्तुः' इत्यादिना पौष्यायणश्रुतिवाक्येन जीवस्य उत्क्रान्त्यादौ स्वातन्त्र्यप्रतीतिर्न कार्या । **स्वात्मना**—परमात्मना उत्क्रान्त्यादिः । **च**—एव । **उत्तरयोः**—'स एतेनैव स्वात्मना परेण इमं गर्भमनुप्रविशति परेण जायते...तं वा एतमभिवदन्ति स्वात्मेति' इति । 'एषह्यानन्दमादत्ते एषह्येनं जीवमभिजीवयति' इति च (पौष्या.) उत्तरयोः वाक्ययोः परमात्मनैव उत्क्रान्त्यादयः इत्यर्थः । एषह्येवेति द्वितीयवाक्यं पूर्ववाक्यस्थस्वात्मशब्दं व्याख्याति ॥ २१ ॥



३. उक्तमाक्षिप्य समादधत् सूत्रम् ।

॥ ॐ नाणुरतच्छ्रुतेरिति चेन्न इतराधिकारात् ॐ ॥ इति ।

**नाणुः**—न जीवोऽणुः । **अतच्छ्रुतेः**—व्याप्ताह्यात्मानः इत्यनणुत्वाभिधायकश्रुतेः इति चेन्न । **इतराधिकारात्**—अत्रैवप्रकरणे 'स आत्मेदं सृजति' स आत्मा स आत्मानः स ईशः स विष्णुः स परः परो वरीयान् इति परमात्मानः पठितत्वेन अस्याः श्रुतेः परमात्माधिकारत्वात् विष्णुपरत्वात् (प्रकरणत्वात्) इत्यर्थः तस्य बहुरूपत्वापेक्षया बहुवचनं युज्यते 'व्याप्ताह्यात्मानः' इति भावः ॥ २२ ॥

४. प्रकरणमात्रं दुर्बलमित्याशङ्कां परिहर्तुं सूत्रम् ।

॥ ॐ स्वशब्दोन्मानाभ्यां च ॐ ॥ इति ।

**स्वशब्दः**–आत्मशब्दः । **उन्मानम्**—अपरिमितत्वम् । **च**—अपि । एताभ्यां चास्य श्रुतेर्विष्णुपरत्वमवगम्यते । 'एषोह्यात्माऽभ्युद्गतो मानशक्तेः तथाप्यसौ प्रमितिं याति वेदैः । पूर्णोऽचिन्त्यः सर्वदेवैकयोनिः सर्वाधीशः सर्ववित् सर्वकर्ता' । इति वाक्यशेषे आत्मश्रुतेः अपरिमितत्वलिंगाच्च । मानशक्तेः अभ्युद्गतः परिमाणातीतः । प्रमितिं याति ज्ञानविषयो भवतीति अर्थः । स्वशब्दोन्माना‌भ्यां प्रकरणं बलवद्-

भवतीति भावः। तेन च श्रुतेः निरर्गलं विष्णुपरत्वसिद्धिः इति अर्थः ॥ २३ ॥

५. जीवस्य अणुत्वे तत्र तत्र परिज्ञानायोगमाशंक्य समादधत्सूत्रम् ।

॥ ॐ अविरोधश्चन्दनवत् ॐ ॥ इति ।

**चन्दनवत्**—यथा हरिचन्दनविप्लुषः एकदेशपतितायाः सर्वशरीरव्याप्तिः तथा जीवः अणुमात्रोपि स्वदेहे व्याप्य तिष्ठति। अतः **अविरोधः**—तत्र तत्र परिज्ञानयोगः इति अर्थः। 'अणुमात्रोप्ययं जीवः स्वदेहं व्याप्य तिष्ठति। यथा व्याप्य शरीराणि हरिचन्दनविप्लुषः'। इति ब्रह्माण्डवचनात् जीवाणुत्वं स्मृतिगृहीतमपि ॥ २४ ॥

६. उक्तमाक्षिप्य समादधत् सूत्रम् ।

॥ ॐ अवस्थितिवैशेष्यादिति चेन्न अभ्युपगमात् हृदि हि ॐ ॥ इति।

**अवस्थितिवैशेष्यादिति चेत्**—चन्दनबिंदुः यथा कुत्रचित् सम्यक् कुत्रचिदसम्यक् वर्तते तथा जीवस्यापि स्यादिति चेन्न। **हि**—यतः। **अभ्युपगमात्**—'हृदिह्येष आत्मा' इति (प्र. ३.) श्रुतेः। अणोरपि जीवस्य सर्वशरीरेपि सम्यगसम्यगवस्थानाभ्युपगमात् इति अर्थः ॥ २५ ॥

७. जीवस्य शरीरव्याप्तौ प्रकारान्तरं प्रतिपादयत् सूत्रम् ।

॥ ॐ गुणाद्वालोकवत् ॐ ॥ इति ।

जीव अणुः। तथापि **गुणाद्वा**—तस्य चिद्गुणेन शरीरव्याप्तिः।



**आलोकवत्**—'चिद्गुणस्य स्वरूपत्वात् तद्व्याप्तिश्चेति युज्यते' इति स्कान्दे। अतः जीवस्य अणुत्वात् श्रुतिविरोधाभावात् श्रुतेः विष्णौ कारणत्वेन समन्वयः युज्यत इति सिद्धम् ॥ २६ ॥ अ० ॥ १२ ॥

अत्र उत्क्रान्त्यधिकरणे वेदार्थानिर्णयनिमित्तेन विशेषतो न्यायादिदर्शनसंस्कारप्रभावेन लौकिकमहात्मचरितश्रवणाचेषामीश्वरकृतान्यथाकरणसामर्थ्यातिशये विश्वासाच्च चेतनविषयव्याप्तश्रुतेः सर्वदेहगतस्पर्शनयुक्तेश्च चेतनव्याप्तिरूपमहत्त्वार्थकत्वे प्रतीतेपि अधिकारिणम् प्रति जीवाणुत्वश्रुतेः गत्यागतिमत्वलिंगात् स्वात्मनेति परमात्मपरमैश्वर्यनिमित्तकत्वलिंगात् व्याप्तश्रुतेः परमात्मपरत्वाच्च चेतनस्य सर्वथा पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा चेतनव्याप्तत्वविषयश्रुतिविरोधनिरसनपूर्वकं चेतनसंबन्धिगत्यागतिकर्तरि सर्वस्वामिनि ज्ञानप्रतिष्ठापनार्थे भ्रान्तितन्निवृत्तिप्रवर्तकि सर्वातीते सर्वमानातीते चेतननिष्ठव्याप्तिकार्यनिर्वाहके चिद्गुणचेतनकर्तरि विष्णौ सर्वश्रुतिसमन्वयसाधनमुखेन जीवाणुत्वकर्तृत्वं महिमा विष्णोरुक्तः। वेदस्य तथा प्रतिपादनं वेदोत्पन्नस्य तज्ज्ञानस्य मोक्षसाधनत्वं च अर्थात् सिद्धं वेदमहत्त्वम् ॥

## १३. त्रयोदशं व्यतिरेकाधिकरणम् । एकं सूत्रम् ।

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं जीवविषयश्रुतिविरोधः परिह्रियते ।

पूर्वपक्षः—'स नित्यो निरवयवः........' इति गौपवनश्रुतौ जीवस्य अबहुत्वं 'स पंचधा' इति बहुत्वं च प्रतीयते। तत्र जीवस्य

एकरूपत्वमेव युक्तम् । निरवयवत्वात् । सामर्थ्यविशेषांगीकारे ईश्वरसरूपताप्राप्तिः । कर्तुम् अकर्तुम् अन्यथाकर्तुं च सामर्थ्यमेवैश्वर्यमिति अङ्गीकारात् । अतो जीवस्य बहुरूपत्वप्रतिपादकश्रुतेरप्रामाण्यात् न विष्णौ श्रुतिसमन्वयः इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ व्यतिरेको गन्धवत्तथा च दर्शयति ॐ ॥ इति ।

**गन्धवत्**—यथा पुष्पात् गन्धः पृथग्गच्छति । एवं **व्यतिरेकः**—अणोः जीवस्य अंशव्यतिरेकेण बहुत्वं भवति । **तथा च दर्शयति**—'अथैक एव सन् गन्धवद्व्यतिरिच्यते । अथैकीभवति अथ बह्वी भवति तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति सोऽचिन्त्यः परमो गरीयान् ' इति शाण्डिल्यश्रुतिः । 'अचिन्त्ययेशशक्त्यैव एकोऽवयववर्जितः । आत्मानं बहुधा कृत्वा क्रीडते योगसंपदा ' इति पाद्मवचनात् जीवस्य बहुरूपत्वोपपत्तेः तत्तच्छ्रुतेः प्रामाण्यात् युक्तः ब्रह्मणि श्रुतिसमन्वय इति सिद्धम् ॥ २७ ॥ अ० ॥ १३ ॥

अत्र व्यतिरेकाधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन सुखं जीवेदिति बोधयच्चार्वाकसमयमाश्रित्य वैषम्यादिदोषरहितेश्वरमपि साधनीकृत्य स्वभोगावाह्यपेक्षया च जीवस्याबहुरूपत्वे श्रुत्यर्थतया प्रतीयमानेऽपि अधिकारिणं प्रति जीवबहुरूपत्वश्रुतेः तन्नियामकाचिन्त्यपरमैश्वर्यलिङ्गाच्च जीवसामान्यस्य पारतन्त्र्यासारत्वानित्यकत्वसाधनद्वारा जीवाबहुत्वश्रुतेः तं यथा ईश्वरः प्रकुरुते तथा वर्तत इत्यर्थकत्वोपपत्तेः श्रुतिविरोधपरिहारपूर्वकं सर्वथा जीवनियामके कर्तुमकर्तुमन्यथाकर्तुं च समर्थे विष्णौ भक्त्या सर्वश्रुतीनामन्वयमुखेन यथेच्छं जीवकारणत्वं महिमा उक्तः ।



तया प्रतिवाक्यं प्रतिपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## १४. चतुर्दशं पृथगधिकरणम् । सूत्रद्वयात्मकम् ।

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं जीवस्य परमात्माभिन्नत्वादिविषयश्रुतिविरोधः परिह्रियते ।

१. पूर्वपक्षः—'तत्त्वमसि ' इति जीवेशयोरभेदः, 'नित्यो-नित्यानाम् ', 'द्वा सुपर्णा ' ( मुं. ) इति भेदश्च प्रतीयते । तात्पर्यनिर्णायकलिङ्गैः बलवत्या अभेदश्रुत्या भेदश्रुतेः बाधे तस्या अप्रामाण्यात् न विष्णौ श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ पृथगुपदेशात् ॐ ॥ इति ।

**पृथक्** — जीवः परमात्मना पृथक् भिन्नः । **उपदेशात्**—विरुद्धधर्माधिकरणत्वयुक्तियुक्तश्रुतेः । ' भिन्नोऽचिन्त्यः परमो जीवसङ्घात् पूर्णः परो जीवसङ्घोह्यपूर्णः । यतस्त्वसौ नित्यमुक्तोह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत् ' इति सोपपत्तिककौशिकश्रुतेः जीवेशयोः विरुद्धधर्माधिकरणत्वेन तयोर्भेद एव सिद्ध्यति इत्यर्थः ॥ २८ ॥

२. अद्वैतश्रुतेरप्रामाण्यशङ्कानिवर्तकं सूत्रम् ।

॥ ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ ॥ इति ।

**तद्गुणसारत्वात्तु** — परमात्मगुणसदृशानन्दादिगुणस्वरूपत्वेन । **तद्व्यपदेशः** — जीवस्य गौण्या वृत्त्या अभेदव्यपदेशः । इति नाभेद-

श्रुतेरप्रामाण्यम् । अयं च गौणो व्यपदेशः प्राज्ञवत् — यथा प्राज्ञे ब्रह्मणि 'सर्वं खल्विदं ब्रह्म' ( छां. ) इति । तथा इत्यर्थः । सर्वम् इत्यत्र सकलजगद्गुणसदृशगुणात्मकत्वेन ब्रह्म जगदिति गौणो व्यपदेशः। अतः अद्वैतश्रुतेः न मुख्याभेदपरत्वम् । 'यः सर्वज्ञः' इति श्रुत्या परमात्मभेदग्रहणात् । श्रुतिसिद्धस्य निराकरणे बौद्धगद्धान्तप्रसक्तिः । जीवेशविषयप्रमाणैः भेदग्रहणात् अभेदबोधनमत्र उपजीव्यप्रमाण-बाधितम् । अतो गौणार्थग्रहणम् । अद्वैतवादे हि 'तत् त्वम्' पदयोः लक्षणया चैतन्यमात्रपरत्वमभ्युपेत्य 'असि' पदेन सामानाधि-करण्यरूपमद्वैतं सर्वप्रमाणविरुद्धम् । 'तत् त्वं' पदयोर्मुख्यार्थत्वं कचिदप्य-नङ्गीकारे अमुख्यार्थस्वीकारस्याशक्यत्वात् । श्रुत्यैकसिद्धे विषये तयैव मुख्यार्थसिद्धिः । ततो वरं 'तत् त्वम्' पदयोर्मुख्यार्थस्वीकारेण 'असि' पदमात्रस्य गौणार्थवर्णनम् । श्रुतिपर्यालोचनया अतत्त्वमसीति पदविभागोऽप्यत्र युक्त एव । स च स्पष्टं भेदपर एव । अत्रैव स्मृति-सम्मतिरप्यस्ति । 'भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः । प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः' इति भविष्यत्पर्ववचनात् । अतः जीवेशयोः भेदसिद्धेः श्रुत्यविरोधेन विष्णौ सर्वश्रुतिसमन्वयः युक्त एवेति सिद्धम् ॥ २९ ॥ अ० ॥ १४ ॥

अत्र पृथगधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन कथञ्चित् सुखं जीवेदिति चार्वाकसमयमाश्रित्य स्वाल्पत्वानुभवे विद्यमानेपि मया ईश्वरेण भवितव्यमिति कामनया ईश्वरेण जीवाभेदे श्रुत्युक्तत्वेन प्रतीयमानेपि अधिकारिणं प्रति जीवभेदश्रुतेः अचिन्त्यत्वपरमत्वपूर्णत्वनित्यमुक्तत्वादि-



परमेश्वरलिङ्गात् जीवेशयोर्विरुद्धधर्माधिकरणत्वहेतुतश्च जीवसामान्यस्य पारतन्त्र्यासारत्वानित्यकत्वप्रसाधनद्वारा जीवाभेदश्रुतेः जीवस्य तद्गुण-सारत्वार्थकत्वोपपत्तेः जीवाभेदविषयश्रुतिविरोधनिरसनपूर्वकं जीवमोक्ष-प्रदातरि विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन जीवसत्ताप्रदत्वरूपं महिमा उक्तः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्ष-हेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ।

### १५. पञ्चदशं यावदधिकरणम् । एकं सूत्रम् ।

अत्र ब्रह्मणि श्रुतिसमन्वयसिध्यर्थं जीवपरमात्माभिन्नत्वादि-विषयश्रुतिविरोधः परिह्रियते ।

पूर्वपक्षः — 'ब्रह्मलयमभ्युपैति' इति जीवस्य अनित्यत्वम् 'आनन्त्याय कल्पते' इति नित्यत्वं प्रतीयते । उत्पत्तिमतः जीवस्य अनित्यत्वं युक्तम् । अतः नित्यत्वश्रुतेः अप्रामाण्यात् जीवस्यानादिकर्म-संबन्धाद्यभावाच्च न विष्णौ श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत्सूत्रम् ।

॥ ॐ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॐ ॥ इति ।

**यावदात्मभावित्वात्**—यावत्परमात्मा अनाद्यनन्तत्वेन तिष्ठति तावज्जीवोपि । **न दोषः**—न श्रुतेरप्रामाण्यमित्यर्थः । कुतः **तद्दर्शनात्** —'नित्यः परो नित्यो जीवः' इति आग्निवेश्यश्रुतेः । अत्रैव भारत-वचनमपि । 'आत्मा नित्यः सुखदुःखेत्वनित्ये जीवो नित्यो धातुरस्य त्वनित्यः' इति । अतः नित्यो जीवः, परमात्मप्रतिबिम्बत्वात् । तथा तस्यानादिकर्मसंबन्धादिरपि युज्यते ।

अत्रेदं चिन्तनीयम् । 'जीवोपाधिः द्विधा प्रोक्तः स्वरूपं बाह्य एव च । बाह्योपाधिर्लयं याति मुक्तौ अन्यस्य तु स्थितिः' इति जीवस्य तद्गुणसारत्वं मनसि निधाय इदं व्याख्यातव्यम् । अतो यावत्परमात्मा अनाद्यनन्तत्वेन तिष्ठतीत्यस्य यावत्स्वतन्त्रो परमात्मा स्वेच्छया जीवस्वरूपत्वेन अनाद्यनन्तत्वेन तिष्ठतीत्यर्थः । अतः ब्रह्मणः अनाद्यनन्तपदार्थकारणत्वं प्राप्तम् । प्रकृतस्य पदार्थस्य अनाद्यनन्तत्वमप्युपपादितम् । तथा जीवस्वरूपमित्यस्य अर्थद्वयं दृश्यते । एकं जीवस्वरूपं जीवत्वमेव । इदं तु लौकिकम् । तत् परतन्त्रं उत्पत्त्यादिमत् । अपरं जीवस्वरूपं ज्ञानानन्दादिरूपं ब्रह्म । तत् स्वतन्त्रम् उत्पत्त्यादिरहितम् । इदंत्वलौकिकम् । एवं प्रकरणानुरोधेन विवेचनीयम् । तथा ब्रह्मणः कालघटितजगतः कारणत्वम् । जीवस्य अनादित्वं कालनिमित्तकम् । परमात्मनोऽनादित्वं न कालनिमित्तकम् । तस्य कालसत्ताप्रदत्वात् । एवं जगतः नित्यत्वेऽपि कार्यत्वं तन्निमित्तानित्यत्वं च । एवमत्र विचार्यं बहु वर्तते । कारणत्वस्य ब्रह्मलक्षणत्वेन तस्य मुख्यत्वं सर्वत्र वाक्यार्थे परिरक्षणीयम् । तथा जगतः कार्यत्वमपि । यावत्पर्यन्तं कारणत्वस्य मुख्यत्वं जगतः कार्यत्वं च रक्ष्यते तावदेव पूर्वाधिकरणे प्रकृतस्य परमात्मनो जगद्वैलक्षण्यं रक्षितं भवति । कारणत्वममुख्यमिति वादः जगतः कार्यत्वमप्यमुख्यं कुर्वन् स्वातन्त्र्यपारतन्त्र्याविवेकसंपादनद्वारा विचारात्मकज्ञानतत्त्वनिरासको भूत्वा अभेदवादे पर्यवस्यति । तदा न किमपि साधितं स्यात् । अत एव जीवेशयोः अनाद्यनन्तत्वे साम्यकथनमपि सर्वाभेदवादतुल्यमेव । अतः विष्णोः मुख्यतः सर्वकारणत्वात् विवक्षा-



भेदेन जीवादिजगतः सर्वदा कार्यरूपेण विद्यमानत्वात् नित्यत्वं पराधीनविशेषावाप्त्या शश्वदुत्पद्यमानत्वात् अनित्यत्वं च संभवतीति जीवोत्पत्तिज्ञापकश्रुतेः जीवनित्यत्वप्रतिपादकश्रुतिविरोधाभावात् विष्णौ कारणत्वेन सर्वश्रुतिसमन्वयः युक्त एवेति सिद्धम् ॥ ३० ॥ अ० ॥ १५ ॥

अत्र यावदधिकरणे श्रुत्यर्थनिर्णयनिमित्तेन 'सर्वं दुःखम्' इति बौद्धादिसमयमाश्रित्य लोकजीवनेऽतिदुःखित्वात् कथंचिच्छ्रुतिवाक्यस्य परिचयनिमित्तात् जीवलये श्रौतत्वेन प्रतीयमानेपि अधिकारिणं प्रति जीवनित्यत्वश्रुतेः जीवस्य परमात्मप्रतिबिम्बत्वलिङ्गाच्च जीवस्य पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा जीवानित्यत्वश्रुतेः बाह्योपाधिलयपरत्वोपपत्तेः जीवानित्यत्वविषयश्रुतिविरोधनिरासपूर्वकं जीवसत्ताप्रदत्वेन जीवबिम्बे विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन नित्योत्पत्तिकत्वरूपजीवनित्यत्वप्रदत्वं ब्रह्मणः महिमा उक्तः । वेदस्य तथा प्रतिपादनं तथैव तज्जन्यज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

## १६. षोडशं पुंस्त्वाधिकरणम् । सूत्रद्वयात्मकम् ।

अत्र विष्णौ श्रुतिसमन्वयसिद्ध्यर्थं जीवस्वरूपविषयश्रुतिविरोधः परिह्रियते ।

१. पूर्वपक्षः—'विज्ञानात्मा सहदेवैश्च सर्वैः' (प्र) 'स आनन्दः' (पैं.) इति जीवस्य ज्ञानानन्दरूपत्वं 'स दुःखाद्विमुक्तः आनन्दी भवति' (पैं) इति तस्य अनानन्दादिरूपत्वं च प्रतीयते । जीवस्य ज्ञानानन्दरूपत्वानुभवाभावात् अनानन्दादित्वश्रुतेः प्राबल्यात्

अन्यश्रुतेरप्रमाण्यात् न विष्णौ श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत्सूत्रम् ।

॥ ॐ पुंस्त्वादिवत्वस्य सतोऽभिव्यक्तियोगात् ॐ ॥ इति ।

**अस्य** — अस्येति तद्गुणसारत्वं प्रकृतं परामृश्यते । तथा च तद्गुणसारभूतस्य जीवस्य इत्यर्थः । 'बल आनन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः ' इति गौपवनश्रुतेः । **पुंस्त्वादिवत्**— यथा पुरुषादीनाम् अपत्योत्पत्तिशक्तिस्वरूपत्वेपि कालतः तदभिव्यक्तेः नायं पूर्वं पुमान् इदानीं तु पुमान् इत्यादि युज्यते । तथा **सतः**— जीवस्वरूपत्वेन मुक्तेः पूर्वमपि सतो ज्ञानानन्दादेः । **अभिव्यक्तियोगात्** — ईश्वरप्रसादेन अभिव्यक्तिः भवति अतः । **तु** — अवधारणे । अत आनन्दीभवतीति व्यपदेशः । प्रागनभिव्यक्तत्वेन अनुभवाभावः । प्रागनभिव्यक्तत्वात् तदुपपत्त्यर्थमविद्याभ्युपगम्यते । अत अविद्यानिवृत्तिपूर्वकानन्दादेः अभिव्यक्त्यर्थं मुमुक्षूणां प्रयत्नोऽप्युपपन्नः । एतच्च सज्जीवविषयम् । अन्येषां त्वन्यथा । तत्र केषांचित् दुःखादिरूपत्वम् इतरेपां मिश्रत्वं ज्ञायते । शास्त्रं च सज्जीवमधिकृत्य प्रवृत्तम् इति भावः ॥ ३१ ॥

२. जीवस्य आनन्दादिरूपत्वेपि आवरणाभावात् तन्निवृत्तिः नाङ्गीक्रियत इति आशङ्कां परिहरत् सूत्रम् ।

॥ ॐ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॐ ॥ इति ।

यदि जीवस्य आनन्दादिरूपत्वमङ्गीकृत्य आवरणनिवृत्तिः मोक्षे नाङ्गीक्रियते तर्हि देवादीनां मोक्षयोग्यानां नित्यम् आनन्दानुभवः स्यात्



असुरादीनां कदापि न स्यात् मध्यममानुषाणां च समश्च स्यात् । अत अविद्यावरणमस्त्येव । भगवत्प्रसादेन तस्य निवृत्तिश्च अङ्गीक्रियते ।

जीवस्य आनन्दादिरूपत्वमेव यदि नाङ्गीक्रियते तर्हि प्रमाणविरोधः । 'नित्यानन्दो नित्यज्ञानो नित्यबलः परमात्मा नैवमसुराः एवमनेवं च मनुष्याः ' इति आग्निवेश्यश्रुतिः । 'नित्यानन्दज्ञानबला देवा नैवं तु दानवाः । दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः' इति भविष्यत्पर्वणि । तेषां यदन्यथा दृश्यं तदुपाधिकृतं भवेत् । विज्ञानेनात्मयोग्येन निजे रूपे व्यवस्थितिः । सम्यग्ज्ञानं तु देवानां मनुष्याणां विमिश्रितम् । विपरीतं तु दैत्यानां ज्ञानस्यैवं व्यवस्थितिः' इति च ।

अत्र विज्ञानेनात्मयोग्येनेत्युक्तरीत्या ज्ञानस्य अज्ञानस्य वा स्वात्मरूपेण जीवस्य व्यवस्थितिसंपादकत्वमेव जीवत्रैविध्ये युक्तिः । 'यत्कर्म कुरुते'(बृ.) 'यो यच्छ्रद्धस्स एव सः ' (छां.) इत्यादेः । अत्र 'आत्मयोग्येन ' इति जीवस्य सर्वथा पारतन्त्र्यद्योतनम् । स्वातन्त्र्ये ज्ञानभेदाभावात् ।

अतो जीवस्य आनन्दादिस्वरूपत्वे श्रुतिविरोधाभावेन विष्णौ श्रुतिसमन्वयः युक्त इति सिद्धम् ॥ ३२ ॥ अ० ॥ १६ ॥

अत्र पुंस्त्वाधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन संसारे नित्यदुःखित्वानुभवबलात् 'सर्वं दुःखम् ' इति बौद्धादिदर्शनसंस्कारप्रभावात् स्वाशक्यानन्दादिप्राप्तिकामनया नित्यातृप्तिमत्वाच्च जीवानानन्दादिस्वरूपे श्रुत्युक्तत्वेन प्रतिभातेपि अधिकारिणं प्रति जीवविषयानन्दादिरूपत्वश्रुतेः तत्स्वरूपस्य ईश्वरप्रसादादभिव्यक्तिलिङ्गाच्च आनन्दादिरूपस्य जीवस्य

पारतन्त्र्यासारत्वानित्यकृत्वसमर्थनद्वारा जीवानानन्दादिश्रुतेः अविद्यावरणनिमित्तकत्वोपपत्तेः जीवानानन्दादिविषयश्रुतिविरोधनिरसनपूर्वकं अभिव्यक्तीकरणापरपर्यायजीवानन्दादिस्वरूपदातरि विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन विष्णोः जीवमोक्षकर्तृत्वं महिमा उक्तः। तथा वेदस्य उपपादनं वेदोत्पन्नस्य तज्ज्ञानस्य मोक्षसाधनत्वमर्थात् सिद्धं वेदमहत्वम्॥

## १७. सप्तदश कर्त्रधिकरणम्। सूत्रदशकम्।

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं जीवकर्तृत्वविषयश्रुतिविरोधः परिह्रियते।

अत्र पूर्वाधिकरणेषु 'यत्कर्म कुरुते तदभिसंपद्यते' (बृ.) इत्यादिना कर्तृत्वरूपविकारवतः जीवस्य परमात्मनः सकाशात् उत्पत्त्यादिमत्वरूपं पारतन्त्र्यं समर्थितम्। अनादिविकारापरपर्यायकर्तृत्ववज्जीवसत्ताप्रदत्वरूपकर्तृत्वेन हि परमात्मनः स्वेच्छानुसारित्वरूपं स्वातन्त्र्यं साधितम्। परमात्मस्वातन्त्र्यमसहमानः प्रतिवादी परमात्मनः स्वातन्त्र्यापरपर्यायकर्तृत्वं निराकर्तुं परमात्मस्वातन्त्र्योपपादकविकारात्मकजीवकर्तृत्वनिषेधार्थं गूढाभिसन्धिः पूर्वपक्षयति।

१. पूर्वपक्षः—विष्णोः कर्तृत्वमुक्तम्। 'यत्कर्म कुरुते तदभिसंपद्यते' इति जीवस्यापि कर्तृत्वं श्रूयते। अस्याः श्रुतेः ईश्वरकर्तृत्ववाचिश्रुतितो बाधात् अप्रामाण्यात् न विष्णौ कारणत्वेन श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ॐ कर्ता शास्त्रार्थवत्वात् ॐ॥ इति।



**कर्ता**—जीवः विधिनिषेधबद्धः। **शास्त्रार्थवत्वात्**— शास्त्रस्य अर्थवत्वात्। जीवस्य अकर्तृत्वे शास्त्रस्य वैयर्थ्यात् जीवोपि कर्ता अङ्गीकार्यः। अत्र शास्त्रं नाम विधिनिषेधरूपम्। (विधिः यथार्थज्ञानविषयकः निषेधस्तु अयथार्थज्ञानविषयक इत्यपि ज्ञेयम्)। कर्तृत्वं च विधिनिषेधबद्धत्वम्। तच्च प्रतिवादिना अङ्गीकार्यमेव इति अर्थः॥ ३३॥

२. जीवकर्तृत्वमित्यन्यगतकर्तृत्वविवेकाग्रह एवेति तं प्रति शास्त्रं प्रवर्ततामिति आशंक्य परिहरत् सूत्रम्।

॥ ॐ विहारोपदेशात् ॐ॥ इति।

'स्त्रीभिर्वा यानैर्वा' (छां.) इत्यादिना विगलिताखिलकल्पने मोक्षेऽपि। **विहारोपदेशात्**—कर्तृत्वश्रवणात् जीवे कर्तृत्वं पारमार्थिकम्॥ ३४॥

३. संसारे जीवकर्तृत्वस्य काल्पनिकत्वेपि शास्त्रं सार्थकमिति आशङ्कां परिहरत् सूत्रम्।

॥ ॐ उपादानात् ॐ॥ इति।

**उपादानात्**— मोक्षाद्यर्थं साधनाद्युपादानप्रतीतेः ततश्च फलदर्शनात्। संसारेपि जीवस्य कर्तृत्वं न काल्पनिकम्॥ ३५॥

४. जीवकर्तृत्वे श्रुतिरस्तीति प्रतिपादयत् सूत्रम्।

॥ ॐ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॐ॥ इति।

**व्यपदेशाच्च क्रियायाम्**—'आत्मैव लोकमुपासीत' (बृ.) इति जीवस्य क्रियायां व्यपदेशो वर्तते। **न चेन्निर्देशविपर्ययः** —

अन्यथा आत्मैव लोकमिति स्यात् । अतो जीवस्य उपासनादिकर्तृत्वं प्रामाणिकमेव । अत्र उपासना क्रिया । क्रिया न कर्तृरहिता । जडं न कर्तृ । परमात्मा उपासनाविषयः । अतो जीव एव कर्ता इति भावः ॥ ३६ ॥

५. ईश्वरकर्तृत्वविरोधं परिहरत् सूत्रम् ।

॥ ॐ उपलब्धिवदनियमः ॐ ॥ इति ।

**उपलब्धिवत्**— यथा जीवस्य ज्ञाने एवमेव ज्ञास्यामि इति । **अनियमः** — नियमो नास्ति । तथा कर्मण्यपि न नियमः । अत ईश्वरस्यैव नियमेन कर्तृत्वं न जीवस्य । 'यमात्मानमन्तरो यमयति' ( बृ. ) इति श्रुतेः । स्वेच्छानुसारित्वमीश्वरस्य । ईश्वरेच्छानियतत्वं जीवस्य इति भावः ॥ ३७ ॥

६. जीवेश्वरयोः कुत एतद्वैलक्षण्यमित्यत्र सूत्रम् ।

॥ ॐ शक्तिविपर्ययात् ॐ ॥ इति ।

ईश्वरस्य पूर्णशक्तिः । अतः स्वातन्त्र्यम् । जीवस्य अल्पशक्तिः । अत अस्वातन्त्र्यम् । जीवस्य अस्वातन्त्र्यं नाम ईश्वरेच्छानियतकर्तृत्वघटितम् इति भावः ॥ ३८ ॥

७. तत्रैव युक्त्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ॐ समाध्यभावाच्च ॐ ॥ इति ।

ईश्वरस्य स्वातन्त्र्यादलं बुद्धिः । स्वतन्त्रस्य पूर्णकामत्वात् । जीवस्य तदभावः । अस्वातन्त्र्यात् । अतः तयोः नियमानियमौ इति भावः ॥ ३९ ॥



८. यदि जीवस्य न स्वातन्त्र्येण कर्तृत्वमपि तु ईश्वरेच्छयैव तर्हि कथं कर्ता इत्युच्यते । स्वतन्त्रः खलु कर्ता इति आशङ्कां परिहरत् सूत्रम् ।

॥ ॐ यथा च तक्षोभयथा ॐ ॥ इति ।

**यथा तक्षा उभयथा** — यथा तक्षा प्रासादकारयितृनियतः तथापि कर्ता तथा ईश्वरनियतोपि जीवः कर्ता इति व्यपदेष्टुं शक्यते ।

अत्रेदमवधार्यम् । जीवस्य ईश्वरनियतत्वद्योतनाय कर्ता इति व्यपदेशः । अतः पराधीनकर्तृत्वं तस्य वर्तते इति न सिद्ध्यति । तस्मात् जीवे दृष्टं कर्तृत्वं परस्यैव । जीवस्य कर्तृत्वं नाम तस्य विकार एव । विकारकर्ता तु परमात्मा । ततः विकारो जीवस्य । स्वातन्त्र्यं परमात्मनः । अयं च 'तक्ष्णः कारयितृनियतत्वम्' इति भाष्यपर्यालोचनया लब्धोऽर्थः । तत एव 'ईश्वरनियतोऽपि जीवः कर्तेति व्यपदेष्टुं शक्यत इत्यर्थः' इति टीकायां सूत्रार्थः उपसंहृतः । यदि कर्तृत्वे पराधीनमिति विशेषः अङ्गीक्रियते तर्हि एकैकक्रियानिर्वाहार्थं कर्तृद्वयसापेक्षता स्यादिति कल्पनागौरवम् । सर्वोपेतेति सूत्रविरोधाच्च । जीवे स्वाधीनशक्त्यङ्गीकारः ईश्वरस्वातन्त्र्यनिराकरणे पर्यवस्यतीति भावः ॥ ४० ॥

९. जीवः कर्तेति व्यपदेशो यत् किञ्चित् शक्तिरिति जीवे या भासते साऽपि शक्तिः न जीवाधीना किन्तु ईश्वराधीना इति प्रतिपादयत् सूत्रम् ।

॥ ॐ परात्तु तच्छ्रुतेः ॐ ॥ इति ।

**परात्तु**—सा च जीवस्य कर्तृत्वशक्तिः परादेव। तच्छ्रुतेः—'कर्तृत्वं कारणत्वं च स्वभावश्चेतना धृतिः। यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षया' इति पैंगिश्रुत्या च कर्तृत्वशक्तिरपि विष्ण्वधीना इत्यवगम्यते इत्यर्थः ॥ ४१ ॥

१०. एतावत्पर्यन्तं जीवस्य न कर्तृत्वं, कर्तृत्वव्यपदेशमात्रं, तदाक्षिप्ता शक्तिरपि ईश्वराधीना इति उक्तम्। तथात्वे तस्य अकर्तृत्वं विष्णोरेव कर्तृत्वमिति पुनः शास्त्रवैयर्थ्यं प्राप्तमिति आशङ्कां परिहरत् सूत्रम्।

॥ ॐ कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ ॥ इति।

**विहितप्रतिषेधावैयर्थ्यादिभ्यः**—विधिनिषेधशास्त्रावैयर्थ्यायैव स्वस्य वैषम्यनैर्घृण्यपरिहाराय। **कृतप्रयत्नापेक्षः** — अयं परमात्मा जीवस्यानादिकर्मप्रयत्नयोग्यतापेक्ष एव प्रेरयति। न त्वनपेक्षः इत्यर्थः। जीवशक्तिः ईश्वराधीना। तथापि न शास्त्रं व्यर्थम्। विष्णुः अनादिकर्मप्रयत्नयोग्यतापेक्ष एव जीवं प्रेरयति। तेन शास्त्रावैयर्थ्यं वैषम्यनैर्घृण्याभावश्च विष्णोः सिध्यति इति भावः। 'पूर्वकर्मप्रयत्नं च संस्कारं चाप्यपेक्ष्य तु। ईश्वरः कारयेत् सर्वं तच्चेश्वरकृतं स्वयम्। अनादित्वाददोषश्च पूर्णशक्तित्वतो हरेः।' इति भविष्यत्पर्वणि। जीवस्य कर्तृत्वं (विकारः) एवं प्रामाणिकम्। तच्च न स्वातन्त्र्येण। 'एतदेवं न चाप्येवम् एतदस्ति न चास्ति च।' इति मोक्षधर्मे। अत अस्ति नास्ति इति युज्यते। तस्मात् जीवकर्तृत्वविषये श्रुतिविरोधाभावात् विष्णौ कारणत्वेन सर्वश्रुतिसमन्वयः युक्त इति सिद्धम् ॥४२॥ अ० ॥१७॥



अत्र कर्त्रधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन पुरुषकर्तृत्वनिरासकसांख्यादिदर्शनसंस्कारेण अप्रयत्नसुखजीवनापेक्षया सामान्येन कर्तव्यनिष्ठत्वाभावाच्च जीवाकर्तृत्वस्य श्रुतिप्रतिपाद्यत्वेन भासमानत्वेपि अधिकारिणंप्रति जीवस्य परमात्माधीनतया जीवकर्तृत्वश्रुतेः परमात्मधर्मिककर्तृत्वकारयितृत्वपरत्वलिङ्गात् विधिनिषेधशास्त्रावैयर्थ्याय सर्वकर्तुः परमात्मनः वैषम्यादिदोषाभावोपपादनाय सर्वत्रविद्यमानशक्तेः परमात्माधीनत्वयुक्तेश्च जीवः यथा परमात्मकृतः तथाभूतस्य तस्य पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा जीवाकर्तृत्वस्य स्वतन्त्रकर्तृत्वनिषेधपरत्वोपपत्तेः जीवाकर्तृत्वश्रुतिविरोधनिरसनपूर्वकं स्वकृतानादिकर्मप्रयत्नयोग्यतापेक्षयैव जीवं प्रेरयति परमात्मनि विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन तस्य जीवप्रेरकत्वं महिमा उक्तः। तथा वेदस्य तत्प्रतिपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

## १८. अष्टादशम् अंशाधिकरणम्। सूत्राष्टकम्।

अत्र परमात्मनि श्रुतिसमन्वयसिद्ध्यर्थं जीवविषयश्रुतिविरोधः निवार्यते।

१. पूर्वपक्षः — 'अंशा एव हीमे जीवाः अंशी हि परमेश्वरः' इति गौपवनश्रुतौ जीवस्य विष्ण्वंशत्वम्। 'नैवांशो न सम्बन्धो नापेक्ष्यो जीवः परस्य' इति भाल्लवेयश्रुतौ अनंशत्वं च प्रतीयते। उभयत्रापि 'अंशा एव'। 'नैवांशाः' इति सावधारणत्वात् न किमपि निर्णेतुं शक्यमिति परस्परविरोधेन श्रुतिद्वयस्याप्रामाण्यात् न विष्णौ श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥ इति।

**अंशः**— प्रकृतो जीवः परमात्मांशः। **नानाव्यपदेशात्**— 'मां रक्षतु' इत्यादिना नानारूपेण जीवस्य ईशसम्बन्धव्यपदेशात्। 'मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः।' 'अवः परेण पितरम्' (ऋ. १.) 'यस्तद्वेद स पितुष्पिता असत्' (म. ना.)। 'यस्ताविजानात् स पितुष्पिता असत्' (ऋ. १.) 'द्वासुपर्णा स युजा सखाय।' इत्यादिना नानाव्यपदेशात् अंशो जीवः। तत्संबन्धित्वमेव तदंशत्वमिति भावः। तथा च जीवस्य भगवदंशत्वे श्रुतिश्च वर्तते। 'अंशोह्येष परस्य' इति पाराशर्यायणश्रुतिः। 'अंशोह्येष परस्य योऽयं पुमानुत्पद्यते च म्रियते च नानाह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति च सखेति च' इति। **अन्यथा च** — भेदोऽप्यत्रोच्यते। 'अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन। नायं तस्यापि कश्चन' इति काषायणश्रुतेः। **एके दाशकितवादित्वमधीयते** —'ब्रह्म दाशा ब्रह्म कितवा ब्रह्मैवेमे दाशाः' इत्यभेदेनैकेऽधीयते। तथा 'अंशोह्येष परस्य भिन्नं ह्येनमधीयिरे अभिन्नमेनमधीयिरे' इति च आग्निवेश्यश्रुतिः। वाराहे च 'पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः। बहुधा गीयते वेदैः जीवोंशस्तस्य तेन तु।' 'यतो भेदेन तस्यायम् अभेदेन च गीयते। अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यतः।' इति भाष्योदाहृतवचनपर्यालोचनया उक्तं च 'अभेदश्रुतयोंऽशत्वात्' इति टीकोक्तमार्गेण अभेदश्रुतिः अंशत्वमेव वक्ति। तथा भेदोऽपि नात्यन्तभेदपरः किन्तु अंशत्वसाधक इति ज्ञेयम्।



अंशत्वं च परमात्मसम्बन्धित्वम्। तच्च परमात्माधीनत्वमेव इति नात्र श्रुतिविगानमिति सिद्धम् ॥ ४३ ॥

२. इदमेव श्रुत्या समर्थयत् सूत्रम्।

॥ ॐ मन्त्रवर्णात् ॐ ॥ इति।

'पादोऽस्य विश्वा भूतानि' इति मन्त्रवर्णः। पादोंऽशः। अतः जीवः ईश्वरांशः ॥ ४४ ॥

३. अत्रैव स्मृतिरपि वर्तत इति प्रतिपादयत् सूत्रम्।

॥ ॐ अपि स्मर्यते ॐ ॥ इति।

**अपि स्मर्यते** — जीवस्येश्वरांशत्वमेव स्मृत्या प्रतिपाद्यते च इत्यर्थः। 'ममैवांशो जीवलोके जीवभूतः' इति गीतावचनात् ॥४५॥

४. जीवस्य मत्स्यादिसाम्याशङ्कां परिहरत् सूत्रम्।

॥ ॐ प्रकाशादिवन्नैवं परः ॐ ॥ इति।

**प्रकाशादिवत्** — खद्योतादिवत् जीवः परमात्मांशः। **परः** — मत्स्यादिस्तु। **न एवं**— न तथा। मत्स्यादीनां स्वरूपांशत्वम्। जीवानां भिन्नांशत्वम्। अतः न तेषां सर्वसाम्यम्। कालाग्निखद्योतवत्। तयोः भिन्नाभिमानिकत्वात् न सर्वसाम्यम् इति भावः ॥ ४६ ॥

५. मत्स्यादीनां जीवानां च स्वरूपांशत्वम् अभेदश्च किं न स्यादित्याशङ्कां निवर्तयत् सूत्रम्।

॥ ॐ स्मरन्ति च ॐ ॥ इति।

**स्मरन्ति च** — स्मृतिषु प्रतिपादयन्ति च। वराहादीनां

॥ ॐ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॐ ॥ इति ।

**अंशः**— प्रकृतो जीवः परमात्मांशः । **नानाव्यपदेशात्**— 'मां रक्षतु' इत्यादिना नानारूपेण जीवस्य ईशसम्बन्धव्यपदेशात् । 'मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः ।' 'अवः परेण पितरम्' (ऋ. १.) 'यस्तद्वेद स पितुष्पिता असत्' (म. ना.) । 'यस्ताविजानात् स पितुष्पिता असत्' (ऋ. १.) 'द्वासुपर्णा स युजा सखाय ।' इत्यादिना नानाव्यपदेशात् अंशो जीवः । तत्संबन्धित्वमेव तदंशत्वमिति भावः । तथा च जीवस्य भगवदंशत्वे श्रुतिश्च वर्तते । 'अंशोह्येष परस्य' इति पाराशर्यायणश्रुतिः । 'अंशोह्येष परस्य योऽयं पुमानुत्पद्यते च म्रियते च नानाह्येनं व्यपदिशन्ति पितेति पुत्रेति भ्रातेति च सखेति च' इति । **अन्यथा च** — भेदोऽप्यत्रोच्यते । 'अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन । नायं तस्यापि कश्चन' इति काषायणश्रुतेः । **एके दाशकितवादित्वमधीयते** —'ब्रह्म दाशा ब्रह्म कितवा ब्रह्मैवेमे दाशाः' इत्यभेदेनैकेऽधीयते । तथा 'अंशोह्येष परस्य भिन्नं ह्येनमधीयिरे अभिन्नमेनमधीयिरे' इति च आग्निवेश्यश्रुतिः । वाराहे च 'पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः । बहुधा गीयते वेदैः जीवोंशस्तस्य तेन तु ।' 'यतो भेदेन तस्यायम् अभेदेन च गीयते । अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यतः ।' इति भाष्योदाहृतवचनपर्यालोचनया उक्तं च 'अभेदश्रुत्योंऽशत्वात्' इति टीकोक्तमार्गेण अभेदश्रुतिः अंशत्वमेव वक्ति । तथा भेदोऽपि नात्यन्तभेदपरः किन्तु अंशत्वसाधक इति ज्ञेयम् ।



अंशत्वं च परमात्मसम्बन्धित्वम् । तच्च परमात्माधीनत्वमेव इति नात्र श्रुतिविगानमिति सिद्धम् ॥ ४३ ॥

२. इदमेव श्रुत्या समर्थयत् सूत्रम् ।

॥ ॐ मन्त्रवर्णात् ॐ ॥ इति ।

'पादोऽस्य विश्वाभूतानि' इति मन्त्रवर्णः । पादोंऽशः । अतः जीवः ईश्वरांशः ॥ ४४ ॥

३. अत्रैव स्मृतिरपि वर्तत इति प्रतिपादयत् सूत्रम् ।

॥ ॐ अपि स्मर्यते ॐ ॥ इति ।

**अपि स्मर्यते** — जीवस्येश्वरांशत्वमेव स्मृत्या प्रतिपाद्यते च इत्यर्थः । 'ममैवांशो जीवलोके जीवभूतः' इति गीतावचनात् ॥४५॥

४. जीवस्य मत्स्यादिसाम्याशङ्कां परिहरत् सूत्रम् ।

॥ ॐ प्रकाशादिवन्नैवं परः ॐ ॥ इति ।

**प्रकाशादिवत्** — खद्योतादिवत् जीवः परमात्मांशः । **परः** — मत्स्यादिस्तु । **न एवं**— न तथा । मत्स्यादीनां स्वरूपांशत्वम् । जीवानां भिन्नांशत्वम् । अतः न तेषां सर्वसाम्यम् । कालाग्निखद्योतवत् । तयोः भिन्नाभिमानिकत्वात् न सर्वसाम्यम् इति भावः ॥ ४६ ॥

५. मत्स्यादीनां जीवानां च स्वरूपांशत्वम् अभेदश्च किं न स्यादित्याशङ्कां निवर्तयत् सूत्रम् ।

॥ ॐ स्मरन्ति च ॐ ॥ इति ।

**स्मरन्ति च** — स्मृतिषु प्रतिपादयन्ति च । वराहादीनां

स्वरूपांशत्वम् । जीवानां भिन्नांशत्वम् । 'स्वांशश्चाथो विभिन्नांश इति द्वेधांश इष्यते । अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथास्थितिः । तदेव नाणुमात्रोपि भेदः स्वांशांशिनोः क्वचित् । विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित् सादृश्यमात्रयुक्' इति वाराहे । 'न त्वत्समोस्त्यभ्यधिकः कुतोऽन्यः' इति च प्रसिद्धमेव ॥ ४७ ॥

६. अत्रैव युक्त्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ॐ अनुज्ञापरिहारौ देहसम्बन्धात् ज्योतिरादिवत् ॐ ॥ इति ।

**देहसम्बन्धात्**— जीवस्य तत्तद्देहसम्बन्धात् । **अनुज्ञापरिहारौ**— ईशानुज्ञाधीनप्रवृत्तिबन्धपरिहारौ । मत्स्यादीनां जीवादीनां च अंशत्वे साम्यम् । तथापि नैकविधता । जीवस्य परानुज्ञया प्रवृत्तिः परतो बन्धनिवृत्तिः देहसम्बन्धित्वात् । 'यमात्मानमन्तरो यमयति ।' 'तमेवं विद्वान्' इत्यादेः । नैवं परमात्मा । **ज्योतिरादिवत्**— यथा आदित्यो एकप्रकारः । तदंशभूताक्ष्णश्च अल्पशक्तिः इत्यर्थः ॥ ४८ ॥

७. तत्रैव युक्त्यन्तरं प्रतिपादयत् सूत्रम् ।

॥ ॐ असन्ततेश्चाव्यतिकरः ॐ ॥ इति ।

**असन्ततेश्च**—जीवस्य सम्यक् शक्त्यभावादेव । **अव्यतिकरः** मत्स्यादीनां सम्यक् शक्तिमत्वात् उक्तस्य साम्याभावस्य व्यत्यासाभावः । जीवस्य अल्पशक्तिः मत्स्यादीनां तु पूर्णशक्तिः । अतः तयोः वैषम्यम् । तथा च चतुर्वेदशिखायाम् । 'तस्य परमस्य रूपाणि ........ सर्वाणि पूर्णानि सर्वाणि अनन्तानि सर्वाण्यसम्मितानि । अथापराः सर्वे



एवापूर्णाः सर्वे एव बध्यन्ते अथ मुच्यन्ते च केचन' इति । असम्मितानि अनुपमानि इत्यर्थः ॥ ४९ ॥

८. तत्रैव युक्त्यन्तरं निरूपयत् सूत्रम् ।

॥ ॐ आभास एव च ॐ ॥ इति ।

**आभास एव**— जीवः परमात्मनः प्रतिबिम्ब एव । मत्स्यादिः न तथा । अत उक्तस्य न व्यत्यासः । **चः**—समुच्चये । जीवानां प्रतिबिम्बांशत्वम् । 'रूपं रूपम्' (ऋ. ६.) इति श्रुतेः । मत्स्यादीनां न तथा । परमेश्वरस्य बिम्बत्वात् मुक्त्यर्थं साक्षात्कारविषयत्वात् । बिम्बस्य हरेरेकत्वात् । प्रतिबिम्बानामनन्तत्वात् । स्वरूपांशस्य मत्स्यादेः प्रतिबिम्बांशस्य जीवस्य च वैषम्यम् । 'द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः । प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च । प्रतिबिम्बांशका जीवाः प्रादुर्भावाः परे स्मृताः । प्रतिबिम्बेष्वल्पसाम्यं स्वरूपाणीतराणि तु ।' इति वाराहवचनात् । 'सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते । जीव ईशस्यानुपाधिः इन्द्रचापो यथा रवेः ।' इति पैंगिश्रुतिः । 'यथैषा पुरुषेच्छाया एतस्मिन्नेतदाततम्' (प्र.) इति च श्रुतिः । वेदस्यापौरुषेयत्वात् नाप्रामाण्यं कल्प्यम् । वेदस्य प्रामाण्ये रक्षिते जीवेशभेदोऽपि रक्षितो भवति । तस्य भ्रान्तिमूलकत्वाभावात् । अतः श्रुतिविरोधाभावात् विष्णौ सर्वश्रुतिसमन्वयो युक्तः इति सिद्धम् ॥ ५० ॥ अ० ॥ १८ ॥

अत्रांशाधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन निरीश्वरवादप्रभावेन केवलस्वाभिमानेन ईश्वरविषये उदासीनबुद्ध्या वा जीवः ईश्वरस्य अंशोऽनंशो वा भवतु इति श्रुतेरनिर्णीतार्थकत्वस्य भानेऽपि

श्रुत्यर्थानिर्णयस्य सर्वकल्पनामूलत्वात् सर्वदोषभूयिष्ठत्वात् अधिकारिणं प्रति जीवस्य ईश्वरांशत्वप्रतिपादकश्रुतेः परमात्मनः सर्वरूपेणापि रक्षकत्वलिङ्गाच्च जीवस्य पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा तद्विरुद्धधर्माणाम् अंशत्वग्रहणप्रतिबन्धकत्वात् ईश्वरस्य तद्धर्मप्रतिपादकश्रुतिस्मृतिबलात् तत्प्रतिबिम्बभूतजीवस्य सर्वश्रेयस्करत्वेनातिसमीपवर्तित्वलिङ्गात् बिम्बभूतेश्वरस्य तथा ईश्वरस्वरूपांशभूतमत्स्यादेश्च प्रतिबिम्बभूतजीवस्य च भेदनियमाच्च अनंशत्वासम्बन्धित्वश्रुतेः स्वरूपांशभिन्नत्वद्योतकत्वपरत्वोपपत्तेः जीवानंशत्वविषयश्रुतिविरोधनिरसनपूर्वकं जीवस्य सर्वहितसाधके जीवबन्धौ जीवसत्ताप्रदे जीवस्वामिनि विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन जीवबिम्बत्वं विष्णोः महिमा उक्तः। तथा वेदस्य प्रतिपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षसाधनत्वमर्थात् सिद्धं वेदमहत्त्वम् ॥

## १९. एकोनविंशम् अदृष्टाधिकरणम् । सूत्रत्रयात्मकम् ।

अत्र ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं जीवप्रतिबिम्बविषयश्रुतिविरोधः निरस्यते ।

१. पूर्वपक्षः — 'रूपं रूपं प्रतिरूपो बभूव' इति जीवस्य प्रतिबिम्बत्वमुक्तम् । तद्विरुद्धश्रुतिः अनुमातुं शक्या । सा च 'न जीवा एकप्रतिबिम्बाः भेदवत्त्वात् घटपटवत्' इति युक्तिसहिता । अतः सयुक्तिकानुमितश्रुत्या प्रतिबिम्बत्वबोधकश्रुतेरप्रामाण्यात् न विष्णौ श्रुतिसमन्वय इति प्राप्ते प्रतिबिम्बवैचित्र्यस्य कारणं सिद्धान्तयत् सूत्रम् ।

॥ ॐ अदृष्टानियमात् ॐ ॥ इति ।



**अदृष्टानियमात्**—अदृष्टं विद्याकर्मादि । तस्य एकप्रकारकत्वाभावात् प्रतिबिम्बे वैचित्र्यं संभवति इत्यर्थः । विद्याद्यदृष्टवैचित्र्येण देवदानवमानवादिवैचित्र्यम् । विद्यादीनामनादित्वान्नासंभावितमिदं कारणम् । 'यथा प्रज्ञं हि संभवः' इत्यादिश्रुतेरित्यर्थः ॥ ५१ ॥

२. रागद्वेषमोहादिदोषा एव प्रतिबिम्बवैचित्र्ये हेतुः स्यात् इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ॐ अभिसन्ध्यादिष्वपि चैवम् ॐ ॥ इति ।

**अभिसन्ध्यादिष्वपि** — दोषाणां वैचित्र्येऽपि । तेषां सादित्वात् तेषां कारणमवश्यकमिति । **एवम्**—अदृष्टस्यैव कारणत्वम् अङ्गीकार्यम् । पूर्वदोषेणोत्तरदोषो भवतीति चेत् अस्य सौत्रेण **च**—शब्देन समाधिस्संगृहीता । दोषवैचित्र्यस्यैव जीववैचित्र्यसंपादकत्वे दोषाभावे प्रतिक्षणं पुंसि वैचित्र्यं न स्यात् । अत अदृष्टमेव वैचित्र्यनिमित्तमिति सिध्यति । प्रतिक्षणे वैचित्र्यं नाम प्रतिक्षणसृष्टिरेव । इयमेव जीवस्य नित्योत्पत्तिः । तन्नित्यत्वकथने निमित्तं च इत्यर्थः ॥५२॥

३. स्वर्गादिप्रदेशभेदः वैचित्र्ये कारणं किमदृष्टेनेति आशङ्कां परिहरत् सूत्रम् ।

॥ ॐ प्रादेशादिति चेन्नान्तर्भावात् ॐ ॥ इति ।

**प्रादेशादिति चेन्न**— प्रदेशवैचित्र्यात् प्रतिबिम्बवैचित्र्यमिति चेत् न । **अन्तर्भावात्** — प्रदेशवैचित्र्यस्यापि अदृष्टवैचित्र्येऽन्तर्भावात् । प्रदेशवैचित्र्यस्यापि अदृष्टमेव कारणम् इत्यर्थः । एकदेशे स्थितानामपि वैचित्र्यदर्शनात् । अतः श्रुत्यविरोधेन विष्णौ कारणत्वेन

सर्वश्रुतिसमन्वयो युक्त इति सिद्धम् । ( विद्यादेरीश्वरप्रसादायत्तत्वादन्ततो गत्वा भगवतः स्वतन्त्रेच्छैव प्रतिबिम्बवैचित्र्ये कारणमिति भावः ) ॥ ५३ ॥ अ० ॥ १९ ॥

अत्र अदृष्टाधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन कर्मैव दुःखादिकारणम् इति सिद्धान्तयत्पूर्वमीमांसादिदर्शनप्रभावात् स्वविषये स्वातन्त्र्याभिमानाच्च स्वनियामकेश्वराङ्गीकारेऽपि तत्कार्यशास्त्रबद्धत्वाभावात् स्वकृतं सर्वम् ईश्वरप्रेरितमिति मिथ्याभिमानाद्वा स्वस्य ईश्वरांशत्वे कथञ्चित् अङ्गीक्रियमाणेऽपि तत्र वैचित्र्यं स्वकृतमेवेति मिथ्याध्यवसायाद्वा स्वस्यैव शश्वत्सृष्टिकल्पनाया अप्यभावनिमित्तेन च स्वजन्मनः पुण्यपापादिनिमित्तकत्वे श्रुतिसिद्धत्वेन प्रतीतेऽपि अधिकारिणं प्रति प्रतिबिम्बवैचित्र्यस्यादृष्टशब्दितविद्याकर्मादिनिमित्तकत्वप्रतिपादकश्रुतेः परमात्मनः विद्याकर्मादिनिमित्तत्वलिङ्गाच्च दोषादिकारणत्वश्रुतेः अदृष्टमूलकदोषादिपरत्वोपपत्तेः श्रुतिविरोधनिरसनपूर्वकम् इच्छामात्रेण सर्वनित्यवस्तुनित्यसृष्टिवैचित्र्यकर्तरि विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन सर्वसर्वसृष्टिकर्तृत्वमहिमा विष्णोरुक्तः । तथा वेदस्य तत्प्रतिपादनं तथैव वेदादुत्पन्नज्ञानस्य मोक्षहेतुत्वमर्थात् सिद्धं वेदमहत्त्वम् ॥

द्वितीयस्य तृतीयेऽस्मिन् सूत्राणामर्थसंग्रहः ।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ॥

---

श्रीवेदव्यासाय नमः । श्रीगुरुभ्यो नमः । हरिः ॐ ।

# ब्रह्मसूत्राधिकरणार्थसंग्रहः

## द्वितीयाध्याये तृतीयः पादः

---

द्वितीयस्य तृतीयेऽस्मिन् विष्णौ श्रुतिसमन्वये ।
निवार्यते विरोधो यः श्रुतिप्राप्तः प्रमादतः ॥ १ ॥
भूतदैवेशजीवेषु विरोधोऽत्रावभासते ।
मुख्यार्थे जन्मनो दृष्ट्या विरोधः परिहार्यते ॥ २ ॥
१. वियदादिकमुत्पन्नं विभक्तत्वाच्छ्रुतेरपि ।
२. उत्पन्नो मातरिश्वा च यथासावधिको भवेत् ॥ ३ ॥
३. असतः सत उत्पत्तिः नैव कुत्रापि दृश्यते ।
स्वातन्त्र्याद्ब्रह्म नोत्पन्नं सर्वथा सर्वरूपतः ॥ ४ ॥
४. वायोरग्निरिति श्रुत्या ब्रह्म कारणमुच्यते ।
द्वारभूतस्तु वायुर्हि परमैश्वर्यसाधकः ॥ ५ ॥
५. स्वेदो घर्माद्धि यद्दृष्टम् 'अग्नेराप' इति श्रुतेः ।
अग्नेर्द्वारत्वमेव स्यात् महाशक्तित्वतो हरेः ॥ ६ ॥
६. अन्नः पृथ्वी तथैवान्नमापश्चेत्यविरोधिता ।
यतोऽन्नं पृथिवी नान्यद्वेदप्रामाण्ययोगतः ॥ ७ ॥
अधिभूताधिदैवेषु जनिश्रुतिविरुद्धता ।
निराकृता ततो विष्णौ सर्वश्रुतिसमन्वयः ॥ ८ ॥

७. विष्णुः संहारको ह्यत्र शक्तत्वान्निर्भयत्वतः ।
निमित्तमात्रमेवान्ये तदधीनं जगद्यतः ॥ ९ ॥
८. पूर्वोत्पन्नस्य सामर्थ्यात् व्युत्क्रमेण लयोदितः ।
९. अपवादो यतो नात्र सिद्धो विष्णौ समन्वयः ॥ १० ॥
१० नित्यानां नित्यतादाता लयहीनस्ततो हरिः ।
११. जीवनित्यत्वदातासौ जीवकर्तेति सूत्रितः ॥ ११ ॥
१२. अणुर्जीवेति सिद्धं स्यादुत्क्रान्त्यादिर्यतो हरेः ।
१३. एकत्वं वा बहुत्वं वा जीवे यद्यत्प्रतीयते ॥ १२ ॥
तत्सर्वं विष्णुशक्त्यैव ततोऽचिन्त्यः परो हरिः ।
१४. जीवेशौ धर्मभेदाद्धि भिन्नावेव तथाश्रुतेः ॥ १३ ॥
अभेदव्यपदेशस्तु गौणस्स्याद्गुणसाम्यतः ।
१५. विष्णोश्च प्रतिबिम्बत्वाज्जीवो नित्यस्स्वरूपतः ॥ १४ ॥
१६. व्यक्तिर्जीवस्वरूपस्य भवेद्विष्णोः प्रसादतः ।
१७. अधीनतैव कर्तृत्वं जीवस्य न ततः परम् ॥ १६ ॥
१८. अंशो जीवः परेशस्य भिन्नाभिन्नेति च श्रुतः ।
१९. प्रतिबिम्बेऽत्र वैचित्र्ये विद्यायेव नियामकम् ॥ १५ ॥
ईशेच्छयैव विद्यादि सैव वैचित्र्यकारणम् ।
इति सर्वत्र सर्वस्य विष्णुरेको हि कारणम् ॥ १७ ॥
भूतदैवेषु जीवेषु विरोधाभावतः श्रुतेः ।
विष्णौ समन्वयस्सम्यक्पादेऽस्मिन् संप्रदर्शितः ॥ १८ ॥

द्वितीयस्य तृतीयेऽस्मिन् नयानामर्थसंग्रहः ।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ॥

श्रीवेदव्यासाय नमः । श्रीगुरुभ्यो नमः । हरिः ॐ ।

## अथ ब्रह्मसूत्रार्थसंग्रहे द्वितीयाध्याये चतुर्थः पादः

---

ब्रह्मविषये श्रुत्यादिसिद्धयुक्तिसहितश्रुतिविरोधपरिहारः अत्र पादार्थः । अध्यात्मविषयत्वं चास्यासाधारण्यम् ।

अत्र १३ अधिकरणानि । २३ सूत्राणि ।

### १. प्रथमं तथाधिकरणम् । सूत्रत्रयात्मकम् ।

तत्रादौ ईश्वरस्य श्रुतिसमन्वयेन जगत्कारणत्वसिद्ध्यर्थम् इन्द्रियोत्पत्तिविषये श्रुतिविरोधः परिह्रियते ।

१. पूर्वपक्षः—'प्राणा एवेदमग्र आसुः तेभ्यो भूतानि जज्ञिरे....' इति काषायणश्रुतौ प्राणानामनुत्पत्तिः श्रूयते । तत्र युक्तिश्च । 'नोपादानं हीन्द्रियाणाम् अतोनुत्पत्तिरिष्यते' इति भविष्यत्पर्वणि । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति प्राणानां उत्पत्तिः श्रूयते । अतः अनुत्पत्तिश्रुतेः सयुक्तिकत्वेन प्राबल्यात् उत्पत्तिश्रुतिरप्रमाणमिति न विष्णोः श्रुतिसमन्वयेन जगत्कारणत्वमिति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ तथा प्राणाः ॐ ॥ इति ।

यथा आकाशादयः परमात्मना उत्पद्यन्ते तथा । प्राणाः— प्राणाः इन्द्रियाणि उत्पद्यन्ते । आकाशादीनामुत्पत्तिसाधकत्वेनोक्तयुक्ति-

समुदायेन । प्राणा अपि परमात्मना उत्पद्यन्ते । पूर्वोक्तन्यायैः परमात्मातिरिक्तस्य कारणत्वासंभवेन सर्वत्रापि उत्पत्तिः परमात्मनैवेति स्वत एव सिध्यतीति परमात्मन इत्युक्तं भाष्ये टीकायां च । अतो न विरोधः ॥ १ ॥

२. पूर्वं वियदधिकरणे अनुत्पत्तौ श्रुत्यभावः कथितः । तत् कथम् ? काषायणश्रुतिरत्र विद्यत इत्याशङ्कां परिहरत् सूत्रम् ।

॥ ॐ गौण्यसंभवात् ॐ ॥ इति ।

**गौणी** — प्राणानुत्पत्तिश्रुतिः गौणी अमुख्यार्थका । **असंभवात्** — मुख्यार्थासंभवात् । 'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः । तेषां भूतैरुपचयः सृष्टिकाले विधीयते । परेण साम्यसंप्राप्तेः कस्य स्यान्मुख्यनित्यता ।' इति भविष्यत्पर्वणि । अत्र यावद्विकारमित्यादियुक्तयः गृह्यन्ते । प्राणनित्यत्वकथनं तत्पारतन्त्र्यज्ञापकविकारित्वकथनमिति भावः । यत्परतन्त्रं तदुत्पत्तिमदिति पूर्वं तदभिध्यानाधिकरणसिद्धम् ॥ २ ॥

३ः श्रुतिप्रतिज्ञाऽननुसन्धानरूपदोषनिमित्तकोऽयं पूर्वपक्ष इति ज्ञापयत् सूत्रम् ।

॥ ॐ प्रतिज्ञानुपरोधाच्च ॐ ॥ इति ।

**प्रतिज्ञानुपरोधात्** — 'स इदं सर्वमसृजत' (तै.) इति प्रतिज्ञानुपरोधात् उत्पत्तिमन्तः प्राणाः । **च** शब्दः समुच्चये । तदुपपादकानि सर्वाणीतरप्रमाणानीति भावः । अतः श्रुत्यविरोधेन विष्णौ कारणत्वेन सर्वश्रुतिसमन्वयो युक्त इति सिद्धम् ॥ ३ ॥ अ० ॥ १ ॥



अत्र तथाधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन सर्वकर्तरि ईश्वरे विश्वासाभावेन स्वात्मकर्तृत्वे आग्रहात् प्राणानुत्पत्तेः सयुक्तिकश्रुत्युक्तत्वेन प्रतीतत्वेऽपि अधिकारिणं प्रति प्राणोत्पत्तिश्रुतेः आकाशाद्युत्पत्तिसाधकलिङ्गसमुदायेन सर्वकर्तृत्वरूपपरमात्मलिङ्गाच्च प्राणानां पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा तदनुत्पत्तिश्रुतेः गौणानुत्पत्त्यर्थकत्वोपपत्तेः प्राणानुत्पत्तिविषयश्रुतिविरोधनिरसनपूर्वकं सर्वोत्तमे विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन अनादिप्राणकर्तृत्वं विष्णोः महिमा उक्तः । तथा वेदस्य प्रतिपादनं तथैव वेदोत्पन्नज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

## २. द्वितीयं तत्प्रागधिकरणम् । एकं सूत्रम् ।

अत्र ब्रह्मणि श्रुतिसमन्वयेन जगत्कारणत्वसिद्ध्यर्थं मनोजन्मविषयश्रुतिविरोधः परिह्रियते ।

पूर्वपक्षः — प्राणादीनामुत्पत्तिमत्वमुक्तम् । तन्न युज्यते । विशिष्यमनसः नित्यत्वश्रवणात् । 'नित्यं मनो अनादित्वात् नह्यमनाः पुमांस्तिष्ठति अनित्यान्यन्यानि' इति गौपवनश्रुतौ सयुक्तिकानुत्पत्तिः मनसश्श्रूयत इति उत्पत्तिश्रुतेरप्रामाण्यात् न विष्णौ कारणत्वेन श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ तत्प्राक् श्रुतेश्च ॐ ॥ इति ।

**तत्** — मनः । **प्राक्** — अन्येभ्यो इन्द्रियेभ्यः प्राक् पूर्वं समुत्पन्नमित्यर्थः । 'मनः सर्वेन्द्रियाणि च' इति मनसः प्रत्येकं उत्पत्तिश्रवणात् मनः उत्पत्तिमत् । **च** — च शब्देन स्मृतिरप्युच्यते ।

'पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः । तदनुत्पत्तिवचनमल्पोपचयकारणात्' इति वायुप्रोक्तरीत्या अन्येन्द्रियेभ्यो अल्पोपचयाभिप्रायेण मनसः विशिष्योक्तिः । उत्पत्तिमतोऽपि मनसः संसारहेतुत्वं प्रलयेऽपि इन्द्रियवत् सूक्ष्मस्वरूपसत्ताभ्युपगमाद्युज्यते । 'सूक्ष्मं तु तदर्हत्वात्,' 'तद्गुणसारत्वात्', इत्यादि मनसि निधाय 'प्रलयेपि .... सूक्ष्मस्वरूपसत्ता' इतीदं व्याख्यातव्यम् । उपचयस्तु उत्पत्तिज्ञापक एव । अतो मनस उत्पत्तौ श्रुतिविरोधाभावात् विष्णौ कारणतया श्रुतिसमन्वयो युक्त इति सिद्धम् ॥ ४ ॥ अ० ॥ २ ॥

अत्र तत्प्रागधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन सर्वकर्तरि विष्णौ विश्वासाभावेन सर्वस्य पारतन्त्र्येऽपि तद्गृहीतृमनसः उत्पत्तिरयुक्तेति आग्रहेण च मनोऽनुत्पत्तिः युक्तियुक्तश्रुतिगृहीतत्वेन प्रतीताऽपि अधिकारिणं प्रति मनसः उत्पत्तिश्रुतेः विकारित्वयुक्तेः तत्स्वरूपसत्तादानरूपेश्वरलिङ्गाच्च तस्य मनसः पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा मनोऽनुत्पत्तिश्रुतेरितरेन्द्रियेभ्यो पूर्वमुत्पन्नत्वार्थकतोपपत्तेः मनोऽनुत्पत्तिविषयश्रुतिविरोधपरिहारपूर्वकं सर्वबिम्बे विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन मनः कर्तृत्वं ब्रह्मणो महिमा उक्तः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

## ३. तृतीयं तत्पूर्वकाधिकरणम् । एकं सूत्रम् ।

अत्र जगत्कारणे ब्रह्मणि सर्वश्रुतिसमन्वयसिद्ध्यर्थे वागुत्पत्तिविषयश्रुतिविरोधः परिह्रियते ।



पूर्वपक्षः—सर्वाणीन्द्रियाणि उत्पन्नानीति उक्तम् । तथापि 'नित्ययानित्यया स्तौमि परमात्मानमच्युतम्' इति 'वाग्वाव नित्या न ह्येषोत्पद्यते । अस्यां हि श्रुतिरवतिष्ठते' इति पौष्यायणश्रुतौ श्रुत्याश्रयभूतायाः वाचः उपचयसापेक्षताभावज्ञापनपूर्वं सयुक्तिकानुत्पत्तिः श्रूयते । अतो वागिन्द्रियविषये उत्पत्तिश्रुतेरप्रामाण्यात् न विष्णौ कारणत्वेन श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ तत्पूर्वकत्वाद्वाचः ॐ ॥ इति ।

वागुत्पत्तिमत् । **तत्पूर्वकत्वात्**—'मनः पूर्वरूपं वागुत्तररूपम्' इति । **वाचः**—वाचः मनःकारणकत्वश्रवणात् । पूर्वम् उत्तरम् इति कारणं कार्यं चोच्यते । 'वागिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता' इति नित्यत्वस्यान्यथा व्याख्यानात् । अत एवोपचयसापेक्षा । पुराणाद्याश्रयत्वादनित्यत्वमपि । इति वाचः उत्पत्तेः श्रुतिविरोधाभावात् विष्णौ श्रुतिसमन्वयः सिद्धः ॥ ५ ॥ अ० ॥ ३ ॥

अत्र तत्पूर्वकाधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन स्वस्य सत्यवचनत्वाद्यभिमानेन च वागनुत्पत्तेः श्रुतिप्रतिपादितत्वेन प्रतीयमानत्वेपि अधिकारिणं प्रति सयुक्तिकवागुत्पत्तिश्रुतेः वाचः उपचयसापेक्षत्वलिंगात् श्रुतिसन्निधियोग्यत्वज्ञापितपरमात्मपारम्यनिमित्तत्वाच्च वाचः पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा वागनुत्पत्तिश्रुतेः श्रुतिसन्निधियोग्यत्वार्थकत्वोपपत्तेः वागनादित्वश्रुतिविरोधनिरसनपूर्वकं वाग्बिम्बरूपे विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन वाक्कर्तृत्वं महिमा विष्णोरुक्तः । तथा वेदस्य

उपपादनं तथैव तदुत्पन्नस्य च ज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

## ४. चतुर्थं सप्ताधिकरणम् । सूत्रद्वयात्मकम् ।

अत्र श्रुतिसमन्वयेन ब्रह्मणो जगत्कारणत्वसिद्ध्यर्थं प्राणसंख्याविषयश्रुतिविरोधः परिह्रियते ।

१. पूर्वपक्षः—'सप्तप्राणाः प्रभवन्ति तस्मात्' इति श्रुतिः । 'सप्तैव मारुता ब्राह्मे प्राणाः सप्त तथात्मनि । अधिदैवे तथाध्यात्मे संख्यासाम्यं विदो विदुः' इति स्कांदे । 'द्वादश वा एते प्राणाः द्वादशमासा द्वादशादित्याः' इति कौण्डिण्यश्रुतौ द्वादशप्राणाः दृश्यन्ते । एवं श्रुतिद्वयस्यापि सयुक्तिकत्वं समम् । अतः समबलयोः परस्परविरोधात् उभयस्यापि अप्रामाण्यात् न विष्णौ श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ सप्तगतेः विशेषितत्वाच्च ॐ ॥ इति ।

**सप्तगतेः**—सप्तेन्द्रियाणाम् । **विशेषितत्वात्**—ज्ञानार्थत्वेन श्रुतौ विशेषितत्वात् । **च**–शब्देन स्मृतिः सूचिता । 'सप्तप्राणास्त्ववगतेः पंचप्राणाश्च कर्मणः । एवं प्राणद्वादशकं शरीरे नित्यसंस्थितम्' इति च-शब्दसूचितभविष्यत्पर्ववचनात् द्वादशप्राणाः इति निर्णयो युक्तः । तत्र सप्तप्राणानामन्तर्भावात् । श्रोत्रचक्षुस्पर्शनरसनघ्राणमनोबुद्धीनां ज्ञानसाधनेन्द्रियत्वात् तद्विवक्षया प्राणानां सप्तत्वमुक्तम् । सप्तानां ज्ञानार्थत्वेन वाक्यशेषे श्रुतौ विशेषितत्वात् । 'गुहाशयां निहिताः



सप्तसप्त' इति । गुहा हृदयम् आशयः स्थानं यस्याः बुद्धेः तदर्थं ये प्रतिशरीरं सप्त सप्तप्राणाः निहिताः ते यत्र चरन्ति इत्यर्थः । अतः श्रुत्योर्न विरोध इति भावः ॥ ६ ॥

२. अन्ये च प्राणाः सन्ति । अत्र सहपाठाभावात् तेषां परमात्मानुत्पन्नत्वशङ्कां परिहरत् सूत्रम् ।

॥ ॐ हस्तादयस्तु स्थितेऽतो नैवम् ॐ ॥ इति ।

**हस्तादयस्तु स्थिते** — पाणिपादपायुगुह्यवाचः कर्मार्थानि । **अतो नैवम्**—अतः तासां न सहपाठः । 'संसारस्थितिहेतुत्वात् स्थितं कर्मविदो विदुः । तस्मादुद्गतिहेतुत्वात् ज्ञानं रातिरिहोच्यते ।' इति वायुप्रोक्तवचनात् कर्मेन्द्रियाणां स्थितिहेतुत्वम् । अतः विष्णौ जगत्कारणे श्रुतिसमन्वयो युक्त इति सिद्धम् ॥ ७ ॥ अ० ॥ ४ ॥

अत्र सप्ताधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन स्वकरणैस्सह स्वस्य स्थायित्वे स्वाभाविकाभिनिवेशाच्च इन्द्रियसंख्याविषयनिर्णये उत्पत्त्यादिप्रसक्त्या स्वनित्यत्वभङ्गभिया अनिर्णयस्य श्रुतिप्राप्तत्वेन प्रतीयमानत्वेपि अधिकारिणं प्रति सयुक्तिनिर्णयश्रुतेः इन्द्रियेषु सप्तेन्द्रियाणां स्वकारणपरमात्मज्ञानार्थत्वेन विहितत्वलिङ्गाच्च इन्द्रियाणां पारतन्त्र्यासारत्वानित्यकत्वसमर्थनेन 'सप्तप्राणा' इति श्रुतेः ज्ञानेन्द्रियपरत्वोपपत्तेः इन्द्रियसंख्याविषयश्रुतिविरोधनिरसनपूर्वकं स्थितिहेतुकपञ्चकर्मेन्द्रियसहितद्वादशेन्द्रियप्रवर्तके विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन द्वादशेन्द्रियसहितजीवकर्तृत्वं ब्रह्मणो महिमा उक्तः । तथा वेदस्य उपपादनं तथैव तदुत्पन्नज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

## ५. पञ्चमम् अण्वधिकरणम् । एकं सूत्रम् ।

अत्र पुरुषोत्तमे जगज्जन्मादिकारणे ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं प्राणपरिमाणविषयश्रुतिविरोधः परिह्रियते ।

पूर्वपक्षः — प्राणपरिमाणविषये 'दिवीव चक्षुराततम्' इति विष्णोः व्याप्तत्वे दृष्टान्तत्वेन चक्षुषो व्याप्तिरुक्ता । तद्दृष्टान्तेन प्राणानां व्याप्तत्वं प्रतीयते । दूरस्थवस्तुदर्शनश्रवणादि च अत्र युक्तिः । करणत्वात् इन्द्रियाणां प्राप्यकारित्वात् । अतः अस्याः श्रुतेः प्राबल्यात् तथा 'अणुभिः पश्यति' इति प्राणाणुत्वश्रुतेः बाधात् अप्रामाण्यमिति न विष्णौ श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ अणवश्च ॐ ॥ इति ।

अणवः—प्राणाः अणवः । च—तेजसा व्याप्ताश्च । 'तद्यथा अणुनश्चक्षुसः' इति शाण्डिल्यश्रुतिः चक्षुर्दृष्टान्तेन जीवस्य अणुत्वं साधयति । अस्याः विशेषश्रुतित्वात् प्राबल्यं वर्तते । किं च यदि इन्द्रियाणि स्वरूपतः व्याप्तानि तदा तैः सर्वग्रहणं स्यात् । तथैव सुहृद्याद्यभावोऽपि स्यात् । चक्षुर्वत् श्रोत्रस्यापि गमनोपपत्तेः । अतः इन्द्रियाणि तेजसा व्याप्तानीति सिध्यति । अतः इन्द्रियाणुत्वश्रुतेर-प्रामाण्याभावात् जगत्कारणे विष्णौ सर्वश्रुतिसमन्वयः युक्त एवेति सिद्धम् ॥ ८ ॥ अ० ॥ ५ ॥

अत्र अण्वधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन न्याययोगदर्शन-प्रभावातिशयेन करणसहितस्वव्याप्तिविषये आदराच्च इन्द्रियव्याप्तत्वस्य



श्रुतिसिद्धत्वेन प्रतीतत्वेपि अधिकारिणं प्रति युक्तिसहितेन्द्रियाणुत्वप्रतिपादकविशेषश्रुतेः जीवस्याणुत्वनियामकपरमेश्वरपारमैश्वर्यलिंगाच्च इन्द्रियाणां पारतन्त्र्यासारवत्वानित्यकत्वसमर्थनद्वारा इन्द्रियव्याप्तत्वश्रुतेः तेजसा व्याप्त्यर्थकत्वोपपत्तेरिन्द्रियव्याप्तत्वश्रुतिविरोधपरिहारपूर्वकं पुरुषोत्तमे जगज्जन्मादिकारणे भक्त्या सर्वश्रुतिसमन्वयमुखेन तेजोनिमित्तकव्याप्तिसहित इन्द्रियाणुत्वजीवाणुत्वकर्तृत्वं ब्रह्मणो महिमा उक्तः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य सर्वपुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ६. षष्ठं श्रेष्ठाधिकरणम् । सूत्रद्वयात्मकम् ।

अत्र श्रुतिसमन्वयेन परमात्मनो जगत्कारणत्वसिद्ध्यर्थं मुख्यप्राणजन्मविषयश्रुतिविरोधः परिह्रियते ।

१. पूर्वपक्षः—'नैष प्राण उदेति नास्तमेति एकल एव मध्ये स्थाता अथैनमाहुः मध्यमः' इति मुख्यप्राणस्य अनुत्पत्तिः श्रूयते । वायुप्रोक्ते तत्र अनुत्पत्तौ युक्तिश्च वर्ण्यते । 'यत्प्राप्तिर्यत्परित्यागः उत्पत्तिर्मरणं तथा । तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यते' इति । अनया बलवत्या श्रुत्या 'आत्मन एव प्राणो जायते' इत्याद्युत्पत्तिश्रुतयः बाधिताः प्रमाणं न भवेयुरिति न विष्णौ सर्वश्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ श्रेष्ठश्च ॐ ॥ इति ।

श्रेष्ठश्च— मुख्यप्रणोपि इतरप्राणा इव परमात्मन उत्पद्यते । 'सौक्ष्म्येण ह्वा एषोवतिष्ठते स्थूलत्वेनोदेति सूक्ष्मश्चाथो स्थूलश्च

प्रकृतितः सूक्ष्मोऽन्यतः स्थूलोऽथैनमाहुः सादिरनादिः' इति गौपवनश्रुतौ प्रकृतितः स्वभावतः अन्यतः शरीरतः मुख्यप्राणस्य इतरप्राणानां यथा तथा उत्पत्तिः श्रूयते । अतः उत्पत्तिश्रुतेः प्रामाण्यात् सर्वकर्तरि विष्णौ श्रुतिसमन्वयः युक्त एवेति सिद्धम् ॥ ९ ॥

२. मुख्यप्राणानादित्वश्रुतेः सयुक्तिकत्वेन प्राबल्यात् मुख्यप्राणो नोत्पत्तिमान् । चेष्टायां प्राणशब्दप्रवृत्तेः उत्पत्तिश्रुतेः बाह्यवायुविषयकत्वात् विरोधाभावशङ्कां परिहरत् सूत्रम् ।

॥ ॐ न वायुक्रिये पृथगुपदेशात् ॐ ॥ इति ।

**न वायुक्रिये** — उत्पत्तिश्रुतिः वायुक्रिये न वक्ति । किन्तु मुख्यवायुमेव । 'चेष्टायां बाह्यवायौ च मुख्यप्राणे च गीयते । प्राण शब्दः त्रिषु ह्येषु मुख्ये मुख्यः प्रकीर्तितः' इति वायुक्रिययोरपि उक्तेः तयोः उत्पत्तिवादिनी श्रुतिः न स्यात् । **पृथगुपदेशात्**— प्राणोत्पत्तिश्रुतेः मुख्यप्राणविषयत्वात् । 'स प्राणमसृजत ........ मुख्यप्राणः परस्माच्च न परः कारणान्वितः' इति वायुप्रोक्तवचनात् 'यत्प्राप्तिः' इत्याद्युक्तमाहात्म्यवतोऽपि मुख्यप्राणस्य अतिमाहात्म्यवद्विष्णोरुत्पत्तिः युक्तैव । 'महत्वान्महतां विष्णुः कर्ता प्राणस्य चैकराट् । किं नाम न सृजेदेषः येन शक्त्येदमावृतम्' इत्यादेः । अतो मुख्यप्राणस्यापि जननात् श्रुतिविरोधाभावात् विष्णौ सर्वजगत्कारणे युक्तश्श्रुतिसमन्वय इति सिद्धम् ॥ १० ॥ अ० ॥ ६ ॥

अत्र श्रेष्ठाधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन प्राणवायुसामर्थ्यविशेषप्रतिपादकयोगदर्शनप्रभावेन स्वस्य निर्विकारनित्यत्व एव



नित्याखण्डब्रह्मभावरूपस्वश्रेयसः प्रतिष्ठितत्वमित्यर्थमाश्रित्य प्रवृत्तस्याद्वैतादिदर्शनसंस्कारवशात् मुख्यप्राणस्य स्वप्राणत्वेन परमात्मापेक्षया अतीवसन्निहितत्वबुद्ध्या च मुख्यप्राणस्यानुत्पन्नत्वे श्रुतिप्रतिपादितत्वेन प्रतीतेऽपि अधिकारिणं प्रति श्रेष्ठस्यापि मुख्यप्राणस्योत्पत्तिप्रतिपादकश्रुतेः मुख्यप्राणकर्तुः परमात्मनः मुख्यप्राणादपि श्रेष्ठतरत्वलिंगाच्च मुख्यप्राणस्य पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा मुख्यप्राणानुत्पत्तिश्रुतेः सूक्ष्मस्वरूपानादित्वपरत्वोपपत्तेः मुख्यप्राणानुत्पत्तिविषयश्रुतिविरोधपरिहारपूर्वकं महतो महीयसि विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन सर्वजननमरणादिकर्तृमुख्यप्राणकर्तृत्वं विष्णोर्महिमा उक्तः । तथा वेदस्य प्रतिपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ७. सप्तमं चक्षुराद्यधिकरणम् । सूत्रद्वयात्मकम् ।

अत्र जगत्कारणे ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं मुख्यप्राणविषयकश्रुतिविरोधः परिह्रियते ।

१. पूर्वपक्षः—'प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः' इति पैङ्गिश्रुतौ मुख्यप्राणस्य पारतन्त्र्यम् उक्तम् । तच्च आग्निवेश्यश्रुतौ 'प्राणादिदमाविरासीत् . . . . . न प्राणो किंचिदाश्रितः' इति प्राणस्य स्वातन्त्र्यज्ञापकश्रुतिबाधितम् । स्वातन्त्र्यश्रुतिस्तु भारतोक्तरीत्या 'यदाश्रयादस्य चेष्टा सोन्यं कथमुपाश्रयेत्' इति युक्तियुक्तत्वात् प्रबला । अनया च पारतन्त्र्यश्रुतेः बाधात् तस्याः अप्रामाण्यात् मुख्य-

प्राणस्य उत्पत्तेरयुक्तत्वाच्च न विष्णौ सर्वकारणत्वेन श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॐ ॥ इति ।

**चक्षुरादिवत्तु**—मुख्यप्राणोपि चक्षुरादिवत् परमात्मना उत्पन्न एव । **तत्सहशिष्ट्यादिभ्यः**—चक्षुराद्यैस्सह परमात्मकृतत्वेनोक्तत्वात् । आदिशब्देन परमात्माधारत्वेन स्थितत्वलिङ्गादिसंग्रहः । मुख्यप्राणः परतन्त्र एव । तथा श्रुतेः । ' सर्वं ह्येवैतत् परमेवतिष्ठते प्राणश्च प्राणाश्च ' इति गौपवनश्रुतौ चक्षुरादिवत् तद्वशत्वेनैव शंसनात् । ' सर्वकर्तापि सन् प्राणः परमाधारतः स्थितः । कथमेवान्यथा स स्यात् यतो नैवेश्वरद्वयम् । अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् । अतो मध्यमतामाहुः तस्य वेदेषु वेदिनः । अनन्येश्वरता प्राणे तदन्येश्वरवर्जनात् ।' इति पारतन्त्र्यश्रुतेः युक्तियुक्तत्वात् प्राबल्याच्च स्वातन्त्र्यप्रतीतेः अवान्तरेश्वरपरत्वं युक्तमिति न तच्छ्रुतिविरोधः । ' नान्योतोस्ति द्रष्टा नान्यदतोस्ति द्रष्टृ ' इत्यादिवचनयुक्तिभिः प्राणस्य स्वातन्त्र्येण द्रष्टृत्वाभावोऽवगम्यते ॥ ११ ॥

२. स्वातन्त्र्यश्रुतिवैयर्थ्याशङ्कां परिहरत् सूत्रम् ।

॥ ॐ करणत्वाच्च न दोषः तथा हि दर्शयति ॐ ॥ इति ।

**करणत्वाच्च**—इतरेषां प्राणानां करणत्वात् मुख्यप्राणस्य च अकरणत्वात् । **न दोषः**—एतद्वैलक्षण्येन मुख्यप्राणस्य अतिशयः उपपद्यते । **तथा हि दर्शयति**—' तानि हवा ' इत्यादि श्रुतिः इत्यर्थः । परतन्त्रोपि मुख्यप्राणः कर्ता । अकरणत्वात् । करणत्वादितरे



प्राणाः अकर्तारः । ' तानि ह वा एतानि सर्वाणि करणान्यथ प्राण एवाकरणः तस्मान्मुख्यस्तस्मान्मुख्य इत्याचक्षते ' इति माण्डव्यश्रुतेः । अतः श्रुत्यविरोधेन विष्णौ श्रुतिसमन्वयः सिद्धः ॥ १२ ॥ अ० ॥ ७ ॥

अत्र चक्षुराद्यधिकरणे श्रुत्यर्थानिर्णयनिमित्तेत विविधयज्ञादिपरपूर्वमीमांसादिदर्शनसंस्कारप्रभावेन अन्यदेवतोपासनेऽभिनिवेशात् कामनयोपासनकरणाभ्यासेन च मुख्यवायुस्वातन्त्र्यस्य श्रुतिप्रतीतत्वेन भानेपि अधिकारिणं प्रति मुख्यप्राणस्याकरणत्वादिमाहात्म्ययुक्तस्यापि पारतन्त्र्यादिव्यवस्थापकयुक्तियुक्तश्रुतेः परमाधारत्वेन स्थितत्वं स्वातन्त्र्येण द्रष्टृत्वाभाव इत्यादिलिंगाच्च तस्य सर्वथापारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा तदीश्वरत्ववचनस्य अवान्तरेश्वरत्वपरत्वोपपत्तेः तत्स्वातन्त्र्यविषयश्रुतिविरोधपरिहारपूर्वकं सर्वप्रकारेणापि तदाश्रये विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन मुख्यप्राणकर्तृत्वं विष्णोः महिमा उक्तः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वमर्थात् सिद्धं वेदमहत्वम्॥

## ८. अष्टमं पंचवृत्त्यधिकरणम् । एकं सूत्रम् ।

अत्र जगत्कारणे हरौ कारणत्वेन श्रुतिसमन्वयसिद्ध्यर्थं प्राणादिविषयश्रुतिविरोधः परिह्रियते ।

पूर्वपक्षः— इतरेषां प्राणानां मुख्यप्राणदासत्वतत्स्वरूपत्वं च श्रूयते । ' सर्वं एते मुख्यदासाः प्राणोपान व्यान उदानः समान ' इति । ' अथ प्राणो वाव सम्राट् ' इति कौंडिण्यश्रुतिः इतरेषां प्राणानां मुख्यप्राणदासत्वं प्रतिपादयति । तथा तत्र ' प्राणापानादयः

सर्वे मुख्यदासा यतोऽनिशम् । अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वते ' इति वायुप्रोक्ते युक्तिश्च प्रतीयते । पुनः ' मुख्यस्यैव स्वरूपाणि प्राणाद्याः पंचवायवः । स एव प्राणिनां देहे पंचधा वर्ततेऽनिशम् । ' इति गौपवनश्रुतिः इतरेषां तत्स्वरूपत्वं च वक्ति । तत्र व्यक्तसद्गुणत्वरूपयुक्तिरपि श्रूयते । ' प्राणः स्वयं प्रतिष्ठते ' इत्यादिना । व्यक्तसद्गुणत्वं च दासेषु न संभवति । संभवेपि दासत्वमेवानुपपन्नं भवेत् । इति उभयश्रुत्योः समानबलत्वात् परस्परविरोधादप्रामाण्यमिति सर्वकारणे विष्णौ न श्रुतिसमन्वय इति प्राप्ते सिद्धांतयत् सूत्रम् ।

॥ ॐ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ इति ।

**पञ्चवृत्तिः**—रूपपञ्चकवत्वेन पञ्चदासप्रवर्तकत्वेन मुख्यप्राणो। **व्यपदिश्यते**—वर्ण्यते । **मनोवत्**—मन यथा तथा । ' अथ पञ्चवृत्त्या एतत्प्रवर्तते । प्राणो वाव पञ्चवृत्तिः । प्राणोऽपानो व्यान उदानः समान इति । तेभ्यो वाव एतेभ्यः पञ्चदासाः प्रजायन्ते । प्राणाद्वाव प्राणः .... .... यथाह वै मनः पञ्चधा व्यपदिश्यते । मनोबुद्धिरहङ्कारश्चित्तं चेतनेति तेभ्यो वा एतेभ्यः पञ्चदासाः प्रजायन्ते मनसो मनो .... .... इत्यादेः (कौ. श्रु.) । सङ्कल्पविकल्परूपं मनः । निश्चयरूपा बुद्धिः । अस्वरूपे स्वरूपमतिः अहङ्कारः । स्मरणहेतुः चित्तम् । चेतसो व्याप्तिः चेतना । अतो न प्राणादयो मुख्यदासा एव । अपि तु तद्वृत्तयोपि । तस्मात् श्रुतीनां युक्तीनां च अविरोधः प्रामाण्यं च । न च व्यक्तसद्गुणत्वविरोधः । मुख्यप्राणस्य अधिकव्यक्तसद्गुणतया इतरेषां तारतम्यानुगुण्येन व्यक्तसद्गुणत्वम् । अतः



श्रुतिविरोधाभावात् विष्णौ कारणतया सर्वश्रुतिसमन्वयः युज्यत इति सिद्धम् ॥ १३ ॥ अ० ॥ ८ ॥

अत्र पञ्चवृत्त्यधिकरणे श्रुतिवाक्यार्थानिर्णयात् तद्विषये औदासीन्यात् श्रुतेर्व्यावहारिकार्थकत्वकल्पकाद्वैतवादप्रभावातिशयेन अन्यदेवतापरत्वेपि दोषाभावबुद्ध्या मुख्यप्राणतदितरप्राणसहितस्वात्माभिमानेन च मुख्यप्राणतदितरप्राणसम्बन्धविषयकनिर्णयाभावस्य श्रुतिप्रतीतत्वे भासमानेपि अधिकारिणं प्रति स्वदासप्रवर्तकवृत्तिपञ्चकस्वरूपमुख्यप्राणश्रुतेः व्यक्तसद्गुणत्वज्ञापितपरमात्माधीनत्वलिङ्गाच्च पञ्चदाससहितपञ्चरूपव्यक्तसद्गुणमुख्यप्राणस्य पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा सम्बन्धाभावश्रुतेः परस्पराविरुद्धविभिन्नार्थकत्वोपपत्तेः सम्बन्धाभावश्रुतिविरोधपरिहारपूर्वकं व्यक्तसद्गुणत्वादिमहत्ववन्मुख्यप्राणप्रवर्तके विष्णौ भक्त्या कारणत्वेन सर्वश्रुतिसमन्वयमुखेन प्राणसंस्थानकर्तृत्वं ब्रह्मणो महिमा उक्तः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य पुरुषार्थहेतुत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ९. नवमम् अण्वधिकरणम् । एकं सूत्रम् ।

अत्र जगत्कारणे ईश्वरे श्रुतिसमन्वयसिद्ध्यर्थं मुख्यप्राणपरिमाणविषयश्रुतिविरोधः परिह्रियते ।

पूर्वपक्षः—' प्राण एवाधस्तात् प्राण उपरिष्टात् ........ प्राणः सर्वतः प्राण एव इदं सर्वमिति सर्वसत्ताप्रदस्य प्राणस्य व्याप्तत्वं श्रूयते । ' अणुना एतत्सृज्यते अणुना एतद्धार्यते ........ प्राणो वा अणुः '

इति सौत्रायणश्रुत्या अणुत्वमुच्यते। तत्र 'यतः सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु। अतो धृतं जगत्सर्वं अन्यथा केन धार्यते।' इति वायुप्रोक्तवचनात् प्राणव्याप्तिविषये युक्तिरुच्यते। अनेन व्याप्तिश्रुतेः प्राबल्यात् अणुत्वश्रुतेरप्रामाण्यं सिध्यति। अतः विष्णौ कारणत्वेन सर्वश्रुतिसमन्वयाभाव इति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ॐ अणुश्च ॐ॥ इति।

**अणुश्च**—प्राणः अणुरेव। बहिर्देहात् मुख्यरूपेण व्याप्तश्च। 'स वा एष प्राणो अणुः महन्नामा अन्तर्वाऽणुः बहिर्महान् प्राणो वा ईशितव्येशो ह्यसौ सर्वस्य ईशितव्यः परस्य' इति कौण्डिण्यश्रुतेः। अत्र वाक्यशेषः प्राणस्य मुख्यत्वं ज्ञापयति। अत्रैव नाडीसञ्चारित्वयुक्तेश्च। अणुर्वै मुख्यप्राणो य उत्क्रामति नाडीभिः इति श्रुतेः। अतः श्रुत्यविरोधेन मुख्यप्राणस्य अणुत्वात् श्रुतेः प्रामाण्यात् जगत्कारणे ब्रह्मणि सर्वश्रुतिसमन्वय इति सिद्धम् ॥ १४ ॥ अ० ॥ ९ ॥

अत्र अण्वधिकरणे श्रुत्यर्थनिर्णयनिमित्तेन न्यायादिदर्शनसंस्कारेण स्वस्य अन्यदेवतापरत्वाभ्यासेन स्वकीयमहत्त्वोपपादकतया च मुख्यप्राणस्य व्याप्तत्वे श्रुतिप्रतिपादितत्वेन प्रतीयमानेपि अधिकारिणं प्रति प्राणाणुत्वश्रुतेः परमात्मपरत्वस्य ज्ञापकतया स्थितत्वरूपलिङ्गाच्च तस्य पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा प्राणव्याप्तत्वश्रुतेः बहिर्देहाद्व्याप्तत्वार्थकतोपपत्तेः प्राणपरिमाणश्रुतिविरोधनिरसनपूर्वकम् उक्तमहत्त्वविशिष्टमुख्यप्राणसत्ताप्रदे विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन तस्य मुख्यप्राणसहितसर्व-



जगत्कर्तृत्वं महिमा उक्तः। तथा वेदस्य प्रतिपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य महापुरुषार्थसाधनत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

## १०. दशमं ज्योतिराद्यधिकरणम्। सूत्रत्रयात्मकम्।

अत्र जगत्कारणे नारायणे श्रुतिसमन्वयसिद्ध्यर्थम् इन्द्रियविषयश्रुतिविरोधः परिह्रियते।

१. पूर्वपक्षः—प्राणानां जीवकरणत्वमुक्तम्। 'जीवस्य करणान्याहुः प्राणानेतांस्तु सर्वशः। यस्माद्वशगा एते दृश्यन्ते सर्वदेहिषु' इति सौत्रायणश्रुतेः। तथापि ब्रह्मणो वा एतानि करणानि चक्षुश्श्रोत्रं मनो वागिति। तद्वैतैः कारयति इति काषायणश्रुत्या ब्रह्मकरणत्वं प्रतीयते। अत्र जीवकरणत्वं युक्तम्। जीववशत्वेन प्राणानामनुभूयमानत्वात् जीवकरणत्वश्रुतेः प्राबल्यात्। अतो ब्रह्मकारणत्वश्रुतेरप्रामाण्यात् न विष्णौ कारणत्वेन श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम्।

॥ ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ॥ इति।

**यत् ज्योतिराद्यधिष्ठानं तु** — ब्रह्मैव। तदेवैतैः करणैः प्रवर्तयति। **तदामननात्** — 'यः प्राणे तिष्ठन्' (बृ.) इत्यादि तदामननात्। अतः सर्वभूतप्रेरकत्वात् ब्रह्मण एव भूतांशानां चक्षुरादीनां कृतत्वात्। सर्वप्राणप्रेरकमुख्यप्राणप्रेरकत्वश्रुतेः 'यश्चक्षुषि तिष्ठन्' इत्यादि श्रुतेश्च ब्रह्मण एव तानि करणानि इति सिद्धम् ॥ १५ ॥

२. कथं जीवकरणत्वश्रुतिः इत्यत उक्तम् ।

॥ ॐ प्राणवता शब्दात् ॐ ॥ इति ।

प्राणवता—जीवेनैव । स्वकीयकरणैः विष्णुः कारयति । अतो न श्रुतिविरोधः । शब्दात्—'एषह्यनेन आत्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति ...... तस्मादेतावाहुः स्मृतिरस्मृतिरिति' इति भाल्लवेयश्रुतेः । अत्र विष्णोरेव करणानि । अयमेवार्थः जीवकरणत्वश्रुतेः इति । कुतः इत्यत आह । 'करणैः कारणं ब्रह्म पुरुषापेक्षयाखिलम् । श्रोत्रादिभिः कारयति करणानीत्यतो विदुः । न जीवापेक्षया मुख्यं कारयेत्परमेश्वरः । केवलात्मेच्छया तस्मात् मुख्यत्वं तस्य निश्चितम्' इति वाराहवचनात् । तर्हि एतेषां ब्रह्मकारणत्वे मुख्यप्राणस्यापि एतत्सम्भवतीति प्राण एवाकरणस्तस्मान्मुख्य इत्युक्तं विरुद्धं स्यादित्यत आह । तत्र मुख्यप्राणस्य अकरणत्वविरोधः न प्रसज्यते । 'न जीवापेक्षया मुख्यं कारयेत् परमेश्वरः । केवलात्मेच्छया तस्मात् मुख्यत्वं तस्य निश्चितम्' इति वाराहवचनमत्रापि योज्यम् । मुख्यमिति मुख्यप्राणमित्यर्थः । मुख्यः प्राणः न जीवापेक्षया कृतः । किं तु ईश्वरेच्छया इत्येव तस्य मुख्यत्वमिति भावः ॥ १६ ॥

३. जीवकरणत्वश्रुतेः उपपत्तिरुच्यते ।

॥ ॐ तस्य च नित्यत्वात् ॐ ॥ इति ।

प्राणानां ब्रह्मकारणत्वेपि जीवकरणत्वश्रुतिः युज्यते । तस्य च—जीवकरणयोः सम्बन्धस्य । नित्यत्वात्—अनादिनित्यत्वात् । बहुकालसम्बन्धिनि परकीये वस्तुनि उपचारेण स्वीयत्वव्यवहारात । अत



एव अनुभवोपि आभिमानिकः । 'अथावियोगीनि । करणैर्वात्र न वियुज्यते देहेनैव वियुज्यते । इत्येतद्धाव करणानां करणत्वम् । यद्धाव न वियुज्यते' इति गौपवनश्रुतेः । अत्र सूत्रे तच्छब्देन जीवपरामर्शः । 'च' शब्देन प्राणवत्पदसन्निधापिताः प्राणाः प्राणसम्बन्धश्च समुच्चीयन्ते । जीवः प्राणवत्वं विना प्राणवान् न भवति इति । अतो श्रुतिविरोधाभावात् विष्णौ सर्वकारणत्वेन श्रुतिसमन्वयः युज्यत इति सिद्धम् ॥ १७ ॥ अ० ॥ १० ॥

अत्र ज्योतिरधिकरणे वेदार्थनिर्णयनिमित्तेन जीवस्य स्वतन्त्रसाधनकर्तृत्वबोधकयोगादिदर्शनमहिम्ना स्वकीयश्रेयस्साधनोपकरणसामग्रीसहितस्य स्वस्य यथेच्छम् इष्टसाधनं साध्यमिति मिथ्याभिमानेन च स्वकीयकरणानि स्ववशानीति निश्चयस्य श्रुत्यनुगृहीतत्वे श्रुत्यैव प्रतीयमानत्वेन भासमानेपि अधिकारिणं प्रति परमात्मकरणत्वश्रुतेः सर्वस्यापि करणव्यापारस्य अनादिकरणसत्तादानपूर्वकं परमात्मकृतत्वलिङ्गाच्च जीवकरणत्वश्रुतेः बहुकालीनजीवसम्बन्धित्वेन विद्यमानत्वार्थकत्वोपपत्तेः अनादिनित्यशः जीवतत्करणतत्सम्बन्धकर्तरि सर्वस्वामिनि विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन जीवसंस्थानकर्तृत्वं महिमा उक्तः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षसाधनत्वम् अर्थात् सिद्धं वेदमहत्वम् ॥

## ११. एकादशं त इन्द्रियाण्यधिकरणम् । सूत्रत्रयात्मकम् ।

अत्र जगत्कारणे हरौ सर्वश्रुतिसमन्वयसिद्ध्यर्थं प्राणविषयश्रुतिविरोधः परिह्रियते ।

१. पूर्वपक्षः — ' अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ति ' इति पौत्रायणश्रुतौ सर्वेषां त्रयोदशानां प्राणानां इन्द्रियत्वं प्रतीयते । तत्रैव प्राणाहीदं द्रवन्ति इति युक्तिरपि श्रूयते । ' द्वादशैवेन्द्रियाण्याहुः मनोबुद्धी तु द्वादशे ' इति काषायणश्रुतिः । अस्याः पूर्वश्रुतिबाधितत्वेन अप्रामाण्यात् । किञ्च त्रयोदशानामिन्द्रियत्वाभावे इन्द्रियत्वं कस्य निवार्यम् । न मुख्यप्राणस्य । तस्य चक्षुरादिवत्परतन्त्रत्वात् । इत्यनुपपत्तिरप्यत्र वर्तते । अतश्च विष्णौ सर्वश्रुतिसमन्वये निरोधिते सिद्धान्तयत् सूत्रम् ।

॥ ॐ त इन्द्रियाणि तद्व्यपदेशात् अन्यत्र श्रेष्ठात् ॐ ॥ इति

**श्रेष्ठात्**—मुख्यप्राणात् । **अन्यत्र**—ये ते (तानि) अन्यानि । **इन्द्रियाणि तद्व्यपदेशात्** — ' द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियम् । द्रवतां हीन्द्रियाणां तु नियन्ता प्राण एकराट् ॥ ' इति पौत्रायणश्रुतेः । तत्र स्मृतिरपि ' तेषां नियामकः प्राणः स्थित एवाखिलप्रभुः । ' इति बृहत्संहितायाम् ॥ १८ ॥

२. चक्षुराद्यपि तथैव स्यात् इत्यत उच्यते ।

॥ ॐ भेदश्रुतेः ॐ ॥ इति ।

न मुख्यप्राणस्य इतरप्राणसाम्यम् । तस्य सर्वकर्तृत्वकारयितृत्वतश्च विष्णुसाम्यं यत्प्रतीयते तस्य इतरेषाम् अभावात् स इतरभिन्नः । **भेदश्रुतेः**—मुख्यप्राणस्य इतरेभ्यो भेदबोधकायाः ' स्थित एव हीदं मुख्यप्राणः करोति कारयति ........ प्रभुं वा एनमाहुः अथेन्द्रियाणि न स्थितानि ........ तस्मादाहुः इन्द्रियाणि करणानि ' इति पौत्रायणश्रुतेः ॥ १९ ॥



३. मुख्यप्राणस्य ईश्वरवशत्वसाम्यात् न वैलक्षण्यमिति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ वैलक्षण्याच्च ॐ ॥ इति ।

**वैलक्षण्याच्च**—प्राणस्य ईश्वरवशत्वेपि वैलक्षण्यं वर्तते । इन्द्रियाणां प्रवृत्तिः जीवप्रयत्नापेक्षा । अतः तस्याः जाग्रतिभावः सुषुप्तावभावः । मुख्यप्राणस्य तु प्रवृत्तिः केवलेश्वरेच्छाधीनैव । ' प्राणाग्नय एव एतस्मिन्पुरे जाग्रति ' इति श्रुतेः । अनेनैव निमित्तेन मुख्यप्राणस्य इन्द्रियाभिमानिदेवतानां च स्पष्टं तारतम्यं दृश्यते । अतः श्रुत्यविरोधेन प्राणस्यानिन्द्रियत्वात जगत्कारणे विष्णौ श्रुतिसमन्वय इति सिद्धम् ॥ २० ॥ अ० ॥ ११ ॥

अत्र त इन्द्रियाण्यधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन योगादिदर्शनप्रभावेन स्वात्मन एव ब्रह्मत्वं मन्यमानः यथाऽद्वैतवादे आत्मातिरिक्तस्य किञ्चिदप्याधिक्यं न सह्यते तादृशभावस्य साधुत्वसाधनार्थे आत्माधिक्यार्थमात्मातिरिक्तस्य सर्वस्यापि मिथ्यात्वं कल्प्यते च तथा स्वकरणेषु स्वातिरिक्तमुख्यप्राणस्यानिन्द्रियत्वे सति इन्द्रियस्वामित्वे विश्वासाभावेन त्रयोदशेन्द्रियवादे स्वस्येन्द्रियस्वामित्वाकांक्षया च मुख्यप्राणस्येन्द्रियत्वे श्रुत्युक्तत्वेन प्रतीयमानेपि अधिकारिणं प्रति मुख्यप्राणस्य इन्द्रियस्वामित्वश्रुत्या तस्य सर्वकर्तृत्वकारयितृत्वप्रदत्वनिमित्तेन स्वसाम्यकर्तुः परमात्मनो पारमैश्वर्यलिङ्गात् तत्सहितद्वादशेन्द्रियाणां पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा प्राणानामिन्द्रियत्वश्रुतेः मुख्यप्राणभिन्नप्राणविषयकत्वोपपत्तेः प्राणविषयश्रुतिविरोधपरिहारपूर्वकं कर्तृत्वादिमहिमोपेत-

प्राणादिकर्तरि विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन तस्य जीवसहितप्राणादिसंस्थानकर्तृत्वं महिमा हरेः प्रतिपादितः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षसाधनत्वं च अर्थात् सिद्धं वेदमहत्त्वम् ॥

## १२. द्वादशं संज्ञाधिकरणम् । एकं सूत्रम् ।

अत्र जगत्कारणे ब्रह्मणि सर्वश्रुतिसमन्वयसिद्ध्यर्थं शरीरादिश्रुतिविषयविरोधः परिह्रियते ।

पूर्वपक्षः—अत्र इन्द्रियाद्याश्रयशरीरादिकारणं प्रसङ्गाद्विचार्यते । 'विरिञ्चो वा इदं विरेचयति विदधाति ब्रह्मा वा व विरिञ्च एतस्माद्धीमे रूपनामनी' इति गौपवनश्रुतिः विरिञ्चस्य नामरूपकर्तृत्वं वक्ति । तत्र युक्तिरपि प्रतीयते । 'यस्माद्विरेचयेत्सर्वं विरिञ्चस्तेन भण्यते । एको हि कर्ता जगतः ब्रह्मैव तु चतुर्मुख' इति ब्राह्मवचनात् । 'परमाद्ध्येते नामरूपे व्याक्रियेते तस्मादेनमाहुः परम इति । अथ कस्मादुच्यते ब्रह्मेति बृहत्वाद्बृहणत्वाच्च' इति आग्निवेश्यश्रुतेश्च । अत्र सयुक्तिकविरिञ्चश्रुतेः मुख्यार्थत्वे बाधकाभावात् एतदन्यश्रुतेः अप्रामाण्यात् न विष्णौ सर्वकारणत्वेन श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॐ ॥ इति ।

**संज्ञामूर्तिक्लृप्तिः** — नामरूपक्लृप्तिः । **तु** — विष्णोरेव । **उपदेशात्** — सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' इति श्रुतेः । विरिञ्चकर्तृत्वनिराकरणपूर्वकं परमात्मकर्तृत्वनिश्चये हेतुरुक्तः त्रिवृत्कुर्वत इति । **त्रिवृत्कुर्वतः**—त्रिवृत्करणमन्तरा न रूपोत्पत्तिः । त्रिवृत्कर्ता तु विष्णुरेव । 'सेयं देवता ........ अनेनैव जीवेन आत्मनानुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतम् एकैकामकरोत्' इत्यादिश्रुतेः । अतः नामादिकर्ता विष्णुरेव । 'त्रिवृत्क्रिया यतो विष्णोः........ कर्ता पितातो भगवान् प्रभुः' इति ब्रह्माण्डवचनात् । अतः शरीरस्य विष्णुः कर्ता । ब्रह्मादिः अवान्तरकर्ता । 'सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः । एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तराः' इति पाद्मवचनात् । अतः श्रुतिविरोधाभावात् विष्णौ सर्वकारणत्वेन श्रुतिसमन्वयो युक्त इति सिद्धम् ॥ २१ ॥

॥ अ० ॥ १२ ॥

अत्र संज्ञाधिकरणे श्रुत्यर्थनिर्णयनिमित्तेन अन्यदेवतापरयजनादिना शीघ्रफलावाप्त्यादिबोधकपुराणादिश्रवणेनान्यदेवताप्रसादादिकामनया तथा लौकिकव्यवहारनिष्पादकव्याकरणादिबलेन वैदिकमुख्यार्थबोधकशब्दार्थपरिज्ञाननिमित्तेन लौकिकार्थमेव शब्दस्य विजानतः मुख्यार्थत्वेन शरीरादिकर्तृत्वेन विरिञ्चादौ श्रुतिप्रतिपादितत्वेन प्रतीतेपि अधिकारिणं प्रति शरीरादिसर्वविषयकविरिञ्चादिकर्तृत्वनिराकरणपूर्वकविष्णुकर्तृत्वश्रुतेः विष्णोरेव त्रिवृत्करणत्वलिङ्गाच्च विरिञ्चादीनां सर्वेषां कर्तृत्वेन प्रसक्तानां पारतन्त्र्यासारस्यानित्यकत्वसमर्थनद्वारा विरिञ्चादिकर्तृकत्वश्रुतेः विरिञ्चादेरवान्तरकर्तृत्वपरत्वोपपत्तेः अत एव तस्यामुख्यत्वाद्विष्णोरेवमुख्यत्वाच्च शरीरादिविषश्रुयतिविरोधपरिहारपूर्वकं सर्वनामरूपादिकर्तरि जग-

त्पितरि विष्णौ भक्त्या सर्वश्रुतिसमन्वयमुखेन सप्राणजीवसहितशरीरादि-संस्थानकर्तृत्वं महिमा उक्तः । तथा वेदस्य उपपादनं तथैव वेदोत्पन्नं ज्ञानं मोक्षहेतुरिति अर्थात् सिद्धं वेदमहत्वम् ॥

## १३. त्रयोदशं मांसाद्यधिकरणम् । सूत्रद्वयात्मकम् ।

अत्र सर्वजगत्कारणे ब्रह्मणि श्रुतिसमन्वयसिद्ध्यर्थं शरीरकारण-विषयश्रुतिविरोधः परिह्रियते ।

१. पूर्वपक्षः—अत्र शरीरकारणं विचार्यते । शरीरस्य अद्भ्यो वा पृथिव्या वा उत्पत्तिः श्रूयते । "अद्भ्यो हीदमुत्पद्यते आपो वाव मांसमस्थि च भवति । आपः शरीरं आप एवेदं सर्वम्" इति कौण्डिण्यश्रुतिः । शरीरस्य तैजसत्वमपि ज्ञायते । 'तेजिष्ठत्वात्तैजसं च' इति । 'पृथिवी शरीरम् आकाशमात्मा' इत्यादि श्रुतिश्च शरीरस्य पार्थिवत्वमाह । काठिण्यादियुक्तेश्च । शरीरमाप्यमित्यत्र युक्तिश्च दृश्यते । 'अम्मयं तु यतो मांसं अतः तृप्तिश्च मांसतः' इत्यादि भारतवचनात् । शरीरे भूतानां मिश्रता च श्रूयते 'इमास्तिस्रो देवताः' इत्यादौ । अतः एकभूतकार्यत्वं शरीरे न युज्यते । एवं श्रुतीनां परस्परविरोधात्तासाम् अप्रामाण्यात् न विष्णोः कारणत्वेन सर्व-श्रुतिसमन्वय इति प्राप्ते सिद्धान्तयत् सूत्रम् ।

॥ ॐ मांसादि भौमं यथाशब्दमितरयोश्च ॐ ॥ इति ।

**मांसादिभौमम्**—यच्छरीरे कठिणं मांसादि तदेव पार्थिवम् । अस्थि शोणितमज्जादि अप् तेजसो कार्यम् इति । **यथाशब्दं**—



यथा श्रुत्याऽवगम्यते तथैवाङ्गीकर्तव्यम् । "यत्कठिणं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजः" इति श्रुतेः । **इतरयोश्च**—अप् तेजसोः विषये च तथैव । पृथिव्यादि भूतानि मिश्रितत्वादेव तथोक्तानि इत्यर्थः । अतो मांसाद्यपि नैकभूतकार्यम् । तदपेक्षयापि अहत्वादि तत्र वर्तते । 'अथो विमिश्रं मिश्राद्ध्येतद्भवति मिश्राणि भूतानि' इति काषायणश्रुतेः । 'पञ्चभूतात्मकं सर्वं' तदप्येकविवक्षया । एकभूतात्म-कत्वेन व्यवहारस्तु वैदिके ।' इति वायुप्रोक्तवचनाच्च ॥ २२ ॥

२. कथं तर्हि विशेषवचनम् इत्यत उच्यते ।

॥ ॐ वैशेष्यात्तु तद्वादस्तद्वादः ॐ ॥ इति ।

शरीरस्य अनेकभूतकार्यत्वेपि विशेषोक्तिर्युज्यते । **वैशेष्यात्तु**—तत्तद्भूतविशेषसंयोगापेक्षया । **तद्वादः**—तत्तद्विशेषोक्तिसम्भवात् । 'पार्थिवानां शरीराणाम् अर्धेन पृथिवी स्मृता । इतरेऽर्धे त्रिभागिन्यः आपस्तेजस्तु भागतः । इति सामान्यतो ज्ञेयं भेदश्च प्रतिपूरुषम् । स्वर्गस्थानां शरीराणाम् अर्धं तेज उदाहृतम् ।' इति बृहत्संहितायाम् । अत्र देहभेदेन विशेषोऽवगन्तव्य इति भावः । अतः श्रुतिविरोधाभावात् सर्वकारणे विष्णौ श्रुतिसमन्वये दोषगन्धाभावः इति सिद्धम् ।

सूत्रे द्विरुक्तेः प्रयोजनम् । सर्वाध्यायार्थावधारणम् अनुक्तानां प्रमाणानां स्वीकारार्थश्च । 'विनिन्द्य चेतरान् मार्गान् सम्पूर्णफलता तथा ।' इति सम्पूर्णफलता शास्त्रस्योक्ता भवतीति शेषः । अर्थाव-धारणाभावे अध्ययनमन्याय्यमिति भावः ॥ २३ ॥ अ० ॥ १३ ॥

अत्र मांसाधिकरणे श्रुत्यर्थानिर्णयनिमित्तेन लौकिकसुखाभिलाषया चार्वाकमार्गमनुसृत्य प्रीत्यास्पदस्य शरीरादिवस्तुनः अनेककारणकत्वे यया कया च विधया तस्य रक्षणसम्भवात् शरीरादेरनेककारणकत्वे श्रुतिसिद्धत्वेन प्रतीयमानेपि अधिकारिणं प्रति शरीरादेः क्लृप्तकारणस्य विष्णुनियतत्वश्रुतेः त्रिवृत्कुर्वतः विष्णोः परमैश्वर्यलिङ्गाच्च कारणत्वेन प्रतीतानां सर्वेषां पारतन्त्र्यासारत्वानित्यकत्वसमर्थनद्वारा विष्ण्वितरकारणत्वप्रतिपादकश्रुतीनां तत्कारणकर्तृविष्णुकारणत्वबोधनतात्पर्यकत्वोपपत्तेः शरीरकारणविषयश्रुतिविरोधपरिहारपूर्वकं सर्वकारणकारणत्वप्रदे विष्णौ भक्त्या श्रुतिसमन्वयमुखेन तत्तत्कारणसहितसर्वजगत्प्रेरकत्वापरपर्यायसर्वसर्वसत्ताप्रदत्वं महामहिमा विष्णोरुक्तः। तथा वेदस्योपपादनं तथैव वेदोत्पन्नस्य ज्ञानस्य मोक्षहेतुत्वम् अर्थात् सिद्धं वेदमहत्त्वम् ॥

द्वितीयस्य चतुर्थेऽस्मिन् सूत्राणामर्थसंग्रहः।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ॥

इति होळयनहळ्ळी नारायणाचार्यसूनुना एच् . एन् . राघवेन्द्राचार्येण ब्रह्मसूत्रमध्वभाष्यमधिकृत्य रचिते ब्रह्मसूत्रार्थसंग्रहनामके ग्रन्थे आद्याध्यायद्वयात्मको तत्त्वदृष्टिभागः समाप्तः

---



श्रीवेदव्यासाय नमः। श्रीगुरुभ्यो नमः। हरिः ॐ।

# ब्रह्मसूत्राधिकरणार्थसंग्रहः

## द्वितीयाध्याये चतुर्थः पादः

द्वितीयस्य चतुर्थेऽस्मिन् समन्वयनिरोधकः।
युक्तिमच्छ्रुतिवाक्यस्य विरोधो हि निवार्यते ॥ १ ॥
१. अस्याग्रेति श्रुताः प्राणाः निरुपादानभावतः।
यतोपचयसापेक्षाः विष्णोर्जाता वियद्यथा ॥ २ ॥
२. अनादित्वान्मनोनित्यमित्युक्तमपि जायते।
यतोपचयसापेक्षं मनोविष्णोरिति श्रुतिः ॥ ३ ॥
३. आश्रयत्वाच्छ्रुतेर्वाग्धि नानुत्पन्नेति सिद्ध्यति।
यस्मात् सा मनसोत्पन्ना मनः पूर्वेति हि श्रुतिः ॥ ४ ॥
४. प्राणा द्वादश वेदोक्ताः विरोधो नास्ति कुत्रचित्।
ज्ञानेन्द्रियाणि सर्वाणि तानि श्रेयस्कराणि च ॥ ५ ॥
ज्ञानेन्द्रियविवक्षातः कथ्यन्ते सप्तहीत्यपि।
बन्धकत्वान्न गृह्यन्ते पञ्चकर्मेन्द्रियाणि तु ॥ ६ ॥
५. दूरगत्यादिसामर्थ्यमिन्द्रियाणुत्वकारणम्।
विष्णुर्यतोत्र सर्वेषां वाक्यानां च समन्वयः ॥ ७ ॥
६. विष्णोरतीव माहात्म्यात् मुख्यप्राणो महानपि।
स्वभावतो शरीराच्च श्रुतेर्जातो यथेतरे ॥ ८ ॥

७. सर्वकर्ता ह्ययं प्राणः विष्णुमाश्रित्य तिष्ठति ।
यतोतो परतन्त्रोसौ स्वतन्त्रो विष्णुरेव हि ॥ ९ ॥
८. पञ्चवृत्तिरयं प्राणः दासपञ्चकयुक् तथा ।
यावद्विकारयुक्तैर्हि तथासौ जायते हरेः ॥ १० ॥
९. प्राणश्चाणुर्जगद्व्याप्तः ईशस्सर्वस्य धारकः ।
अतीव महतो विष्णोः जातत्वादिति हि श्रुतिः ॥ ११ ॥
१०. करणानि हरेरेव पुरुषापेक्षयाखिलम् ।
तैः कारयति विष्णुर्हि ततः सम्बन्धतोपि च ॥ १२ ॥
जीवस्य करणान्याहुः सर्वं विष्णुकृतं यतः ।
११. सर्वं करोति यस्मात्सः मुख्यप्राणस्त्वनिन्द्रियः ॥ १३ ॥
सर्वस्य तद्वशत्वात्तु विष्णोः सदृश उच्यते ।
केवलेशवशत्वेन विष्णुना निर्मितः स च ॥ १४ ॥
१२. विरिञ्चेन कृतं नेदं यस्मादेतत्त्रिवृत्कृतम् ।
त्रिवृत्कर्ता हि विष्णुस्तु नामरूपादिकं ततः ॥ १५ ॥
१३. व्यवहारोत्र यावांश्च तथा कार्यं कृतं हरेः ।
अनेकभूतकार्यत्वं शरीराणां भवेदतः ॥ १६ ॥
सयुक्तिश्रुतिबाधोत्र युक्त्या सम्यङ् निवारितः ।

द्वितीयस्य चतुर्थेऽस्मिन् नयानामर्थसंग्रहः ।
कृतोऽयं राघवेन्द्रेण व्याससेवा भवेदसौ ॥

श्रीकृष्णार्पणमस्तु

---

## शुद्धाशुद्धपत्रिका

| पु. | पं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७ | १ | ब्रह्मशब्दश्च | ब्रह्मशब्दश्च |
| १७ | १५ | पूर्णत्वेद्रेक | पूर्णत्वोद्रेक |
| १८ | ३ | अवयवायविनोः | अवयवावयविनोः |
| १८ | २१ | भाबः | भावः |
| २० | १० | इन्दा .... | इन्द्रा .... |
| ३७ | १३ | (घृत. ऋ.) | (घृत. सू.) |
| ३८ | १२ | पिबत्यसा | पिबत्यसौ |
| ४६ | १ | इत्याशङ्का | इत्याशङ्काम् |
| ४९ | ३ | आद्यद्वितीये | आद्यद्वितीय |
| ४९ | ८ | चराचराणां संहर्ता | चराचरप्रसंहर्ता |
| ४९ | ११ | अज्ञातत्वादन्तरत्वात् | अज्ञातोह्यन्तरो यस्मात् |
| ४९ | १३ | वैश्वानरो विष्णुरेव | वैश्वानरो हि विष्ण्वैव |
| ६९ | ७ | कोह्यवान्यात् | कोह्येवान्यात् |
| ९४ | १३ | ६ | ३ (अधि. संख्या) |
| १०९ | १७ | आद्ये चतुर्थपादे | द्वितीयस्याद्यपादे |
| १२१ | ५ | पाषण्डिमतां | पाषण्डिमतं |
| १३८ | २ | तत्प्रदिपादनं | तत्प्रतिपादनं |
| १३६ | ३ | इदातींतन... | इदानींतन... |

| पु. | पं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४० | ३ | पादयारेव | पादयोरेव |
| १४५ | ५ | लब्दमिदं | लब्धमिदं |
| १४७ | १४ | खवल्विदं | खल्विदं |
| १५१ | १५ | सर्वश्रति | सर्वश्रुति |
| १५६ | १२ | तदिच्छाधीनत्लिंगेन | तदिच्छाधीनत्वलिंगेन |
| १५८ | १४ | सयर्थनद्वारा | समर्थनद्वारा |
| १७८ | ६ | ससदश | सप्तदशम् |
| १८१ | ११ | वेदात्पन्नस्य | वेदोत्पन्नस्य |
| २०० | १० | मुख्यवायुपेव | मुख्यवायुरेव |
| २१६ | १६ | ....द्वयात्मको | ....द्वयात्मकः |

ಇದೇ ಗ್ರಂಥಕರ್ತರಿಂದ ರಚಿತವಾಗಿ, ಅವರಲ್ಲೇ ದೊರೆಯುವ

## ಕನ್ನಡ ಗ್ರಂಥಗಳು

---

### ೧) ಮಧ್ವಸಿದ್ಧಾಂತ (೧೯೪೪)

ಡೆಮ್ಮಿ ⅛ ಪುಟಗಳು ೨೪೦. ಕ್ರಯ ರೂ. ೩-೦೦

ಈ ಗ್ರಂಥವು ಶ್ರುತಿ, ಶ್ರುತ್ಯನುಕೂಲ ಸ್ಮೃತಿ, ತದನುಗತ ಯುಕ್ತಿ ಇವುಗಳಿಂದ ರೂಪಿತವಾದ ಮಧ್ವಸಿದ್ಧಾಂತವನ್ನು ಉಪಪಾದಿಸುವುದಕ್ಕೋಸ್ಕರ ಅವಶ್ಯವಾಗಿ ಗಮನಿಸಬೇಕಾದ ಕ್ರಮವನ್ನು ಬೋಧಿಸುತ್ತದೆ.

* *

### ೨) ಈಶಾವಾಸ್ಯ ಉಪನಿಷತ್ (೧೯೫೭)

ಕ್ರೌನ್ ⅛ ಪುಟಗಳು ೧೩೦. ಕ್ರಯ ರೂ. ೨-೦೦

### ೩) ತಲವಕಾರ (ಕೇನ) ಉಪನಿಷತ್ (೧೯೫೭)

ಕ್ರೌನ್ ⅛ ಪುಟಗಳು ೧೨೨. ಕ್ರಯ ರೂ. ೨-೦೦

ಈ ಎರಡು ಉಪನಿಷದ್ ಗ್ರಂಥಗಳಲ್ಲಿ ಮಧ್ವಭಾಷ್ಯ ಮತ್ತು ಶ್ರೀ ರಾಘವೇಂದ್ರಸ್ವಾಮಿಗಳ ಖಂಡಾರ್ಥ ಇವುಗಳ ಅರ್ಥಾನುವಾದಪೂರ್ವಕವಾಗಿ ಉಪನಿಷದರ್ಥವು ಪ್ರತಿಪಾದಿತವಾಗಿದೆ. ಈ ಅರ್ಥಕ್ಕೇ ಮಧ್ವಸಿದ್ಧಾಂತ ಎಂದು ಹೆಸರು.

PRINTED BY SAMSKRITA SAHITYA SADANA PRINTERS, MYSORE 4